*BIBLIOTHECA INDICA A COLLECTION OF ORIENTAL WORKS*

# PRAMĀNĀNTARBHĀVA

EDITED BY

PANDIT S. C. NYAYACHARYA

*with English Introduction by*

DR GAURINATH SASTRI

WORK NUMBER
290




ISSUE NUMBER
1589

THE ASIATIC SOCIETY
1 PARK STREET
CALCUTTA 16

BIBLIOTHECA INDICA A COLLECTION OF ORIENTAL WORKS

# PRAMĀNĀNTARBHĀVA

EDITED BY
PANDIT S. C. NYAYACHARYA
*with English Introduction by*
DR GAURINATH SASTRI

WORK NUMBER
290




ISSUE NUMBER
1589

THE ASIATIC SOCIETY
1 PARK STREET
CALCUTTA 16

# प्रमाणान्तर्भावः

पण्डितसतीन्द्रचन्द्रन्यायाचार्य्येन सम्पादितम्

वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतेः
श्रीगौरीनाथशास्त्रिमहोदयस्य
भूमिकासंवलितम्




**दि एशियाटिक सोसाइटि**
१ पार्क स्ट्रीट
कलिकाता-१६

*BIBLIOTHECA INDICA SERIES*

# PRAMĀṆĀNTARBHĀVA

EDITED BY

Pandit S. C. NYAYACHARYA

*with English Introduction by*

Dr GAURINATH SASTRI




THE ASIATIC SOCIETY

1 PARK STREET

CALCUTTA 16

## INTRODUCTION

The *Pramāṇavārttika* which is now published for the first time, has been prepared on the basis of a single manuscript. As such it is hardly expected that we shall be able to present a correct text acceptable to all. It is, however, encouraging that the work of editing the text has been entrusted to a scholar who is not only acquainted with the different orthodox systems of Indian philosophy but has also studied the heterogeneous systems of Buddhism and Jainism with consummate care and devotion. The editor has taken great pains in reconstructing the text and has suggested readings where the manuscript is obviously incorrect or incomplete. The suggestions that the editor has given unmistakably point to his outstanding critical acumen and justify his claims to be considered as one of the front-rank traditional scholars of the age.

In the four sections of this work the author has discussed four proofs of knowledge as admitted by the general body of Indian philosophers, namely *Śabda*, *Upamāna*, *Arthāpatti* and *Abhāva* (*Anupalabdhi*). He however, is in favour of admitting two *pramāṇas* only, namely, perception and inference. Though there is hardly any positive evidence which will invariably lead us to presume that the author is a champion of this school of thought or that, yet the editor has also tried to identify the particular school of Indian philosophy to which the author belongs. The opening verse of the work contains a pun on the word *Akalaṅka*. Now, we know of a Jaina philosopher of the same name who composed a few works on Jaina philosophy and flourished towards the latter half of the 8th century A.D. It may be quite possible that the manner in which *Akalaṅka* has been referred to will suggest that the author of the present work is one of the disciples of *Akalaṅka*, the noted Jaina philosopher. It is also a fact worthy of consideration that in the Jaina system of thought only two *pramāṇas* have been admitted.

The learned author, however, has taken sufficient pains to point out that there is hardly any expression in the present work which is usually current in Jaina texts. He is rather of the opinion that in the second verse of the work there is a mode of expression which tends to suggest that the work is from the pen of a Buddhist philosopher. He further points out that the Buddhist philosopher like the Jaina philosopher admits two proofs of valid knowledge only. Further, it is to be noted that the Buddhist philosopher recognises two proofs of valid knowledge only because there are two kinds of *prameya* to be cognised by them—a position which has been criticised by Jaina philosophers. The present author upholds the validity of two pramāṇas only and the argument that he advances is identical with what the Buddhist philosopher offers.

As regards the age of the work the editor draws our attention to a few references to the statements of the great Mimāmsā bhāṣyakāra as also to the quotations from the *Ślokavārttika* of Kumārila. It is not unlikely that the author is a Buddhist, inasmuch as it is almost obvious that the main purpose of his writing is to criticise the *Mīmāmsā* system and finally to reject it, particularly in respect of the number of valid proofs of knowledge. Of course, it must be said in this context that in the section on *Upamāna* the author has presented at the outset the view of the Naiyāyikas and has subsequently rejected it. One more evidence which may be discussed in the context of the date of the author is that in the first section we have references to king Harṣa. It is not likely that this Harṣa is the author of the famous epic, the *Naiṣadhīyacarita*. It is quite possible that the reference is to Emperor Harṣa.

GAURINATH SASTRI

# भूमिका

श्रीकृष्णात्रेयगोत्राय प्रसन्नायाग्निहोत्रिणे ।
नमः श्रीगुरुदेवाय वामाचरणशर्मणे ।।

अविदितनामधेयस्य कस्यचित् सरहस्यवैदुष्यभास्वरो दर्शनतत्त्वबुभुत्सूनां वादिनां विनोदनाय मुद्रापयित्वा प्रकाश्यते "प्रमाणान्तर्भाव" इत्यभिधानो दार्शनिकः कश्चन लुप्तप्रायो ग्रन्थः ।

भारते सुप्रसिद्धेषु बहुष्वपि प्राचीनसुदुर्लभपुस्तकसंग्रहस्थानेषु बहुकृत्वः समन्विष्यापि नादर्शीभूतं मुद्रितममुद्रितं वा पुस्तकान्तरमस्माभिरतिप्रयतमानैरप्यद्याप्युपलब्धमिति मदीयप्रियतमविद्यार्थिना गुर्जरे साहित्यिकतया प्रख्यापितसुख्यातिना विख्यातेन भाषातत्त्वविदा विविधग्रन्थविरचनलब्धयशसा श्रीमता केशवराम-काशीरामशास्त्रिणा (के, का, शास्त्रिणा) राजस्थानान्तर्गतजेसलमेरस्थात् सुप्रसिद्धात् प्राचीनपुस्तकस्तोमसञ्चयनिलयात् प्रतिलिप्य संगृहीतमेतं प्रमाणान्त-र्भावमाकूतवशान्मया पुनः प्रतिलिप्य समासादितमेकमात्रमादर्शं समवलम्ब्यैव साम्प्रतमस्य प्रकाशनविधावसुविधां विविधामप्यविगणय्य कलिकातास्थ-राजकीय-संस्कृतमहाविद्यालयाध्यक्षस्य एम, ए, डि लिट् इत्याद्युपपदविभूषितस्य श्रीगौरीनाथ शास्त्रिमहोदयस्य (साम्प्रतं वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतेः) अध्यापक-श्रीशिशिरकुमारमित्र एम, ए, डि, फिल् पदवीभाजो (जेनारेल सेक्रेटारी एसियाटिक सोसाइटी) महाशयस्य चातिशयाग्रहविशेषात् कलिकाता-"एसियाटिक-सोसाइटी"-नामकसंस्थायाः पदाधिकारिभिरन्यैरप्यनुरुद्धा मुद्रापयितुमुक्तग्रन्थं वयं प्रवृत्ताः ।

यच्चैतदेकमात्रमादर्शपुस्तकमुपलब्धं तदप्यशुद्धि-बहुलं क्वचिदस्पष्टाक्षरं स्थाने स्थाने च त्रुटितं क्वचन वा न्यूनाधिकवर्णविन्यासाच्छन्दोभङ्गादधिकाङ्ग-हीनाङ्गनृपुङ्गववदनिर्दोषमपि तत् तत् स्थानं यथामति कथञ्चित् किञ्चित् परिवर्त्त्य प्रपूर्य्य चापूर्णप्रतीकं दार्शनिकवाचकमहोदयानां पुरतः समुपस्थाप्यते ।

प्रमाणद्वयसंस्थापनामुखेन मुख्यतया मीमांसकमतखण्डनमेव प्रमाणान्त-र्भावस्य विषयः। उपमानपरिच्छेदे नैयायिकाभिमतमुपमानमतिरिक्तप्रमाणतया प्रसङ्गात् किञ्चिदुपपाद्य निराकृतं साकं मीमांसकमतेन ।

[शब्दोपमानार्थापत्त्यभाव (अनुपलब्धि) रूप] परिच्छेदचतुष्टयोपबृंहितः खल्वेष ग्रन्थः। सर्वत्रैव सर्वथोपक्रमोपसंहारादिकं समभिलक्ष्य सम्भावनासम्बलितं च पाठमादृत्य संनिवेश्य चोपरि संख्यया चिह्नितं विधायादर्शपुस्तकस्थं च पाठं नीचैरेव संन्यवशयम् । श्लोकस्थं च क्वचिदधिकाक्षरमसङ्गतं वा स्थानं ( )

एतच्छिह्नमध्यस्थं, क्वचन वा न्यूनाक्षरं स्वयं परिपूर्य्य [          ] एतच्चिह्न-मध्यस्थमस्थापयम्। कुत्रचिद्वा स्वकल्पितविकल्पपाठमपि सम्भाव्यमानमपि।

कोऽसावस्य ग्रन्थस्य कर्त्ता? कश्च वा तत्सम्प्रदायः? सम्प्रदायेऽप्यवान्तरसम्प्रदायो वा कः? किंदेशीयः? किंसमयको वा? ग्रन्थे चास्मिन्नालोचितपदार्थसार्थानुमितसम्प्रदायात् सम्प्रदायान्तरसन्निविष्टेनान्येन वा केनापि विशिष्टविदुषा परसम्प्रदायाभिमतपदार्थजातमनुसृत्य ग्रन्थोऽयं व्यरचीत्यादिकमादावेव पर्यालोचनीयतया समपेक्ष्यत इति तत्र तावद्दीयमानमवधानमाकृष्यते।

मङ्गलाचरणावसरे परिच्छेदपरिसमाप्तिकाले ग्रन्थसमाप्त्यनन्तरं वा प्रायोऽन्यत्र दृष्टनियमवदत्र स्वनामादेरनुल्लेखाद् ग्रन्थकारनामधामानुसन्धानप्रयासः केवलमायासायैव। ग्रन्थप्रणेतुस्तत्पितुर्मातुर्वा सुतरामेवाविर्भावसमयस्य चानुसन्धानाभिसन्धिरप्यनवन्ध्य एव। यश्च ग्रन्थारम्भे श्लोकविशेषः समुपलभ्यते––

"यस्य प्रज्ञाप्रकाशः कवलयति जगच्चक्रमेवाकलङ्कः
सत्तार्थं वा विधातुं यदपर उदयी नासमर्थोऽकलङ्कः।
तं नत्वा स्वार्थसम्पत्सुहितमनुपमो मञ्जुवाग् यो न दीनः
प्रत्यक्षं वानुमावेत्यत उदितमिदं येन तुल्यो नदीनः॥" इति

अत्र चाकलङ्कपदमाकलय्य खृस्तीयाष्टशतशताब्द्याः प्रायोऽन्तपर्य्यन्तं जीवितावधेर्दार्शनिकदुरूहरहस्यानुस्यूतार्हतीयप्रामाणिकग्रन्थ "लघीयस्त्रय" 'न्यायविनिश्चय" प्रभृतिप्रणेतुरकलङ्कस्वामिनस्तत्तद्रचनानुसारि "परीक्षामुख" कर्तुर्दार्शनिकमुखस्य खृस्तीयाष्टशतशताब्द्यामाविर्भूतस्य माणिक्यनन्द्याचार्य्यस्य च पश्चादुद्भूतेन जैनदार्शनिकपण्डितभट्टाकलङ्कदेवशिष्येण केनाप्ययं व्यरचि "प्रमाणान्तर्भाव" इति कैश्चिज्जैनविपश्चिद्भिरनुमीयते, यतो जैना अपि प्रत्यक्षपरोक्षभेदेन प्रमाणद्वयवादिन एव।

विशेषतस्तु––

श्री देवानन्दगच्छान्वर (य) शिशिरकरे काशिभव्यारविन्दे
सूरावुद्योतनाख्ये प्रतपति तपने वादिमुद्रा (कुन्दा) वलीनाम्[1]।
हाराज्ये सानुभावा समभवदमला साधुकूर्चालवाणी
वन्द्या विद्यारविन्दस्थितचरणयुगा सद्यशोवर्द्धनाख्या॥
तत्पुत्रौ साधुशिष्यौ गुरुपरिचरणप्राप्तपुद्वीचि वोढुं
ज्येष्ठोऽसौ देवभद्रोऽपर[2]लघुकवयाः[3] सद्यशोदेवनामा।

---

Ms 1 वलीनां।    Ms 2 भद्ररेपर।    Ms 3 वया।

एनामुन्ना(त्ता)न्यमानां कतिपयरचनां बौद्धमीमांसकनां
व्यालेखिष्टां विशिष्टां निजगुरुपदवीमीप्समानौ प्रतीताम्[1] ।। इति

ग्रन्थसमाप्त्यनन्तरं तत्सम्बलितद्वित्र-रिक्तपत्रानन्तरलिखितोक्तश्लोक-द्वयानुसारेण जैनानां विविधगच्छेषु श्रीदेवानन्दगच्छीयजैनविद्वदङ्कितत‌यापि जैन-दर्शनीयः खल्वयं ग्रन्थ इत्यपि पौर्वापर्य्यतात्पर्य्यपर्य्यालोचनां परिवर्ज्य स्वाभिप्राय-मन्ये जैनाः प्रकटयन्ति। भातृद्वयव्यालेखनकालस्तु चतुर्नवत्यधिकैकादशशततमे (११९४) वैक्रमसम्बत्सरे भाद्रपद-मास इति श्लोक द्वयानन्तरं लेखो दृश्यते।

परन्तु ग्रन्थान्तर्निविष्टवादप्रतिवादसंवाददृष्टया जैनदर्शनाभीष्ट-पारिभाषिकशब्दानां जैनाभिमततादृशपदार्थानां च तथानुल्लेखात् तन्मतविरुद्ध-वादसम्बद्धतया च जैननयमनुनीय तदभिमतप्रमाणद्वये पराभिमत-प्रमाणान्तरा-णामन्तर्भावभावनैव नोदेतुं शक्यते।

अपि च द्वितीयश्लोकीयतृतीयपादे "कतिपयरचनां बौद्धमीमांसकानां" इत्यनेन स्पष्टतया बौद्धसिद्धान्तानुसारी खल्वयं ग्रन्थ इत्येव निःशङ्कं प्रतीयते। बौद्धदर्शनीयशब्दानामेव तदीयपदार्थगर्भिततया च प्रायः प्रयोगात् तथैवार्थसंगतेर-प्यवगतेः।

यदि चार्हतः कश्चिद्विपश्चिद् बौद्धसिद्धान्तमाराध्य षट्प्रमाणवादि-जैमिनिमुनिनयप्रणयिकौमारिलमतपराहत्यर्थमाहत्य ग्रन्थमिमं प्राणैषीदित्युच्यते, तदपि नातिशोभनम्। स्वमतमनुसृत्यैव तत्सम्भवात् तदुपेक्ष्य भिक्षुशरणं गतः "स्वगृहे पायसं त्यक्त्वा भिक्षामटति दुर्मति" रिति रीतिं को नाम प्रेक्षापूर्व्वकारी निर्विचारमुररीकुर्य्यात्। प्रत्युत जैनदर्शनप्रणयिना तेन परिहाय जैनीयनयं किमित्य-नयाभिनयो जैननयापमानात्मा दुर्विधिरेव विधीयेत।

वस्तुतस्तु प्रमाणद्वयवादित्वेनैकरसास्वादरसिकतया बौद्धसिद्धान्तसिद्धमपि प्रमाणद्वित्वमेवेति स्वसिद्धान्तितप्रमाणद्वित्वमलंकर्त्तुं लोके तत्प्रचारबुद्धया बौद्धविद्वद्भिरचितमेतत् पुस्तकं सहोदरावार्हतसाधुपण्डितौ देवभद्रयशोदेवनामधेयौ प्रतिलेपतुरिति "कतिपयरचनां बौद्धमीमांसकानां व्यालेखिष्टां विशिष्टा" मिति प्रतीकेन प्रतीयते।

मीमांसाश्लोकवार्त्तिके ये ये च विषयाः समुपनिबद्धाः प्रायः सर्व एव ते पदार्थस्वरूपनिरूपणे प्रमाणविषये च बौद्धसिद्धान्तनितान्तपरिपन्थिनः। मुख्यतया मीमांसाकरवेदविरोध्युद्धतबौद्धाराद्धसिद्धान्तखण्डनपुरःसरं स्वमतमण्डनं भट्ट-

---

[1] Ms 1 प्रतीतां

पादानामभिमतमभिलक्ष्यते विचक्षणानां टीकाकृतां च श्लोकव्याख्यानावसरे ख्यातिमताम् ।

प्रमाणान्तर्भावग्रन्थे च "ननु दृष्टः श्रुतो वाऽर्थ इति भाष्यकृतो वचः" (पृः १७ पं १३), "प्रमाणान्तरभावोऽपि भाष्यकृत्प्रतिपादितः" (पृः २५ पं १) इत्येतत्प्रतीकद्वयेन भाष्यकृतः (शवरस्वामिनः), तथा "अर्थस्यासन्निकृष्टस्य तथा चाह कुमारिलः" (२५ पृः २३ पं) इत्यत्र कुमारिलस्य नामोल्लेखात् प्रतिप्रसङ्गं च श्लोकवार्त्तिकश्लोकोल्लेखपुरःसरं मीमांसकमतखण्डनैकव्रत एवासावासीदज्ञात-नामा बौद्ध विद्वान् ।

तथात्वे च कुमारिलभट्टानन्तरं ग्रन्थकर्त्तुः समयः । परं तु कदेति निर्णेतुं न शक्यते स्पष्टप्रमाणाभावात् ।

सौगतसंगतगतानुगतिकागतपारिभाषिकशव्दसम्वलितं च श्लोकमुल्लिख्य पूर्वापरपक्षकुक्षौ निक्षिप्य च बौद्धप्रबुद्धराद्धान्तमाराध्य स्वीयविरुद्धवादमव-रोद्धुमेव कश्चन बौद्धविद्वानेव "प्रमाणान्तर्भावं" व्यरचयदिति विविधवाद-मर्य्यादापर्यालोचनया सहजत एव विबुधैरवबुध्यते ।

विविधा एवैवंविधाः समुपलभ्यन्ते ग्रन्था यत्र प्राचीनग्रन्थकृतां नामधामा-द्युल्लेखो नैव दृश्यते, दृश्यते चात्राऽप्येवम् । ग्रन्थारम्भे मङ्गलाचरणीयश्लोको-ऽप्यसमाप्तक्रियः साकाङ्क्षशब्दान्तरमपेक्षत एवेत्यत्र वाचका एव प्रमाणम्, सुतरामेव तदनन्तरमपि श्लोकान्तरास्तित्वं सम्भाव्यते, सम्भाव्यते च कदाचित् तत्र ग्रन्थकृतो नामादिकमासीदिति । लिपिकृद्भ्यां च सहोदराभ्यां देवभद्र-यशोदेवाभ्यां यथादृष्टं तथालिखितमिति ग्रन्थस्यास्य प्राचीनत्वं प्रतीयते ।

प्रमाणान्तर्भावीय प्रथमपरिच्छेदे—"कालान्तरस्थितिर्नैव श्रीहर्षादेः प्रसिध्यति" (पृः ४ पं १९) इति राज्ञः हर्षबर्द्धनस्य नामकीर्त्तनमपि ग्रन्थकृता कृतम् । "खण्डन खण्डखाद्य"—"नैषधचरिता"दि रचयिता तु नैष श्रीहर्षः । प्रमाणान्त-र्भावप्रणयनसमयात् पश्चादेव ११–१२–खृस्तीयशताब्द्यां तस्याविर्भावस्थित्यादेः प्रामाणिकैतिहासिकसम्मतत्वात् । प्रतिलिपिविधात्रोरपि प्रायो नैषधादिविधातुः समसमयत्वादिति ।

दृश्यते च 'प्रमाणान्तर्भाव'—पुस्तकं याभ्यां प्रतिलिप्य संरक्षितं, ताभ्यामेव प्रतिलिपिसमयोऽपि ग्रन्थलेखसमाप्त्यनन्तरं पत्रान्तरे प्रदर्शितो यथा—"सं–१९९४ भाद्रपदे"—इति प्रतीकद्वारा ।

प्रागप्यभिहितं, प्रत्यक्षपरोक्षाख्यप्रमाणद्वयवादित्वेन बौद्धा जैनाश्च सगोत्राः । प्रमाणयोश्च तयोर्न्यूनाधिकसंख्यानिरासप्रयासाविरसाश्च ते

स्वसमयसंरिरक्षिषवः खण्डनमण्डनपण्डिता इति तत्तद्दर्शनसंदर्शनसंलब्ध-दार्शनिकज्ञान विज्ञाननिपुणानां नाविदितम्।

भवन्तु नाम तथागतास्तथा, नार्हताः, तथापि धिक्कृत्य परपक्षं, परीक्ष्य च स्वयं स्वीयप्रमाणगतद्वित्वसंख्यासंरक्षणदक्षतया भिक्षूणामपि पक्षं कक्षीकृत्य नित्य-कृत्यरतानामार्हतानामपि लोके कथञ्चित् तत्प्रपञ्चे नारुचिः।

दृश्यते चान्यत्रापि स्वतन्त्रे परतन्त्रे वा क्वचिदभ्युपेत्यापि परमतं मिथो विवादोत्थापनतदपनोदनप्रयासविशेषः। इत्थं च प्रमाणान्तर्भावोऽपि बौद्धोक्तो निरुक्तयुक्त्या प्रतिलिप्य जैनैरपि संरक्षित इत्यपि नासम्भवपरम्।

स्वतन्त्रविरोध्यविरोधिमतान्तरखण्डनमण्डनमनीषया स्वीयसिद्धान्तविरुद्ध-वादवद्धनिबन्धानामपि संग्रहाभ्यासौ विद्वन्मूर्द्धन्यानामप्यद्यापि नातिशिथिलाविति न कैर्विज्ञैर्विज्ञायते।

काञ्चिदद्यापि केचित् कोविदाः किंवन्तीं वदन्ति,––कुमारिलभट्टपादा बौद्ध-धर्मप्रचाराभ्युत्थानं विलोक्य मागधमागत्य तदुच्छेदविधौ प्रवर्त्तन्ते स्मेति। तदानीं संख्यातीतास्तथागतास्तथार्हताः पण्डिता वैदिकधर्ममर्मसमुन्मूलनैकव्रता वेदोद्भूतप्रसिद्धषड्दर्शनरहस्यं जिज्ञासवो विशेषतः कुमारिलभट्टपादान् विजेतुं न्यायवैशेषिकसांख्ययोगमीमांसादिशास्त्राण्यधीत्य शास्त्रार्थपारदर्शितां मनोनीता-मासेदुः।

भट्टपादैरेतदवगत्य समागत्य च नालन्दाविश्वविद्यालये वेदविरोधि-बौद्धजैनादिदर्शनमध्येतुं विश्वविद्यालयकुलपतेर्ज्ञानविज्ञानवृद्धस्य वङ्गाङ्गसङ्गिनः शीलभद्रस्य प्रवीणप्रधानशिष्यजयसेनसकाशाद् वेदविरोधिदर्शनजातं सावधानै-रधीतम्।

ततश्च वौद्धजैनादिदर्शने निरतिशयनैपुण्यमापन्ना यथा तथा यथायथं तथागतानागतानार्हतांश्च दार्शनिकान् विशेषतः पराजित्य वैदिकं धर्मभाण्डं प्रकाण्डं कर्मकाण्डं परितः प्रचारयामासुरिति। अवितथैवेयं कथा––"दोषे प्रति-समाधानमज्ञाते क्रियतां कथम्" (भट्टिकाव्य षष्टसर्गे) इति परसिद्धान्तमपसिद्धान्त-त्वेन प्रतिपादयितुं परतन्त्रपरिज्ञानं विज्ञैर्नाविज्ञायते।

प्रमाणस्य लक्षणं संख्याभेदं चादायातीवप्राचीनकालादेव बहुविधपरम्परा-संपृक्तसम्प्रदायप्रवर्त्तकदार्शनिकप्रवराणां स्वीयसमयानुसारि-प्रचुरतरविचारभरो नितरामेव निरीक्ष्यते मतभेदप्रसारः। यथा––

न्यायदर्शने––प्रत्यक्षानुमानोपमानशब्दाख्यानि चत्वारि प्रमाणानि।

वैशेषिकेच––प्रत्यक्षमनुमानं चेति द्वयम्।

मीमांसायां—प्रभाकरमते—'प्रत्यक्षानुमानोपमानशब्दार्थापत्तिभेदात् पञ्च ।

कुमारिलभट्टमते च—प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्धिभेदात् षट् ।

सांख्ये योगे च—प्रत्यक्षमनुमानं शब्दश्चेति त्रीणि ।

वेदान्ते—कुमारिल भट्टानुमतानि षड़िति ।

आर्षेषु चैतेषु षड़दर्शनेषु यथा प्रमाणलक्षणं विलक्षणं, संख्या च विप्रतिपन्ना, तथैव बौद्ध-जैन-चार्वाक दर्शनेष्वपि ।

बौद्धदर्शने जैनदर्शने च यद्यपि संख्यायां न विप्रतिपत्तिस्तथापि लक्षणे सा विद्यत एव । चार्वाकस्तु प्रत्यक्षैकप्रमाणवादीति लोकसिद्धम् ।

तदित्थं प्रमाणसंख्यासंग्राहकश्लोकैः सकलदार्शनिकसम्मतप्रमाणसंख्या समाख्यायि विख्यातेन केनापि विदुषा यथा—

प्रत्यक्षमेकं चार्वाकाः कणादसुगतौ पुनः ।
अनुमानं च तच्चापि सांख्याः शब्दं च ते उभे (अपि) ।।
न्यायैकदेशिनोऽप्येवमुपमानं च केचन ।
अर्थापत्त्या सहैतानि चत्वार्य्याहुः प्रभाकराः ।।
अभावषष्ठान्येतानि भाट्टा वेदान्तिनस्तथा ।
सम्भवैतिह्ययुक्तानि इति पौराणिका जगुः ।। इति ।

तदत्र प्रस्तुते पुस्तके प्रमेयद्वित्वेन प्रमाणद्वित्वमेव प्रतिज्ञातम् यथा—

प्रत्यक्षं चानुमानं च प्रमाणमिदमेव हि ।
प्रमाणसंप्लवायोगात् प्रमेयद्वयसंगतेः ।। (पृः १–पं ५)

तदानीं परितो लब्धकीर्त्तेः शास्त्रतत्त्वस्फुरत्स्फुर्त्तेः (१) श्रीमतो धर्मकीर्त्तेः प्रमाणवार्त्तिकेऽप्येतदविसंवादितम्[1] । यथा—

न प्रत्यक्षपरोक्षाभ्यां मेयस्यान्यस्य सम्भवः ।
तस्मात् प्रमेयद्वित्वेन प्रमाणद्वित्वमिष्यते ।। इति ।
(प्रमाण वार्त्तिक–२।६२।१३४ पृः)

"सिद्धं च परचैतन्यप्रतिपत्तेः प्रमाद्वयम्" ।।
(प्रमाण वार्त्तिक–६८ पृः)

---

1 "मानं द्विविधं विषयद्वैविध्यात् शक्त्यशक्तितः ।" (प्र. वा. २।१) अत्र मनोरथ-व्याख्या—"तद्द्विविधं प्रत्यक्षानुमानभेदेन । कस्मात् ? विषयस्य स्वलक्षणसामान्यलक्षणरूपतया द्वैविध्यात् । शाब्दादिकमपि हि प्रमाणं भवत् सविषयं वक्तव्यं विषयश्च स्वसामान्य-लक्षणादतिरिक्तो नास्ति । ततस्तद्विषयत्वे प्रत्यक्षानुमानतैव । नापि सामान्यविशेषात्मक एकोऽस्ति विषयः । परस्परविरुद्धयोरैकात्म्यायोगात् ।

यद्यप्यार्हतेऽपि दर्शने प्रत्यक्षपरोक्षाख्यं प्रमाणद्वयमेव तथापि तन्मते प्रमेयद्वित्वान्न प्रमाणद्वयमित्ययं विशेषः। प्रमेयद्वित्वात् प्रमाणद्वित्वमिति सौगतमतं जैनाचार्य्यैर्बहु विचार्य निराकृतम्।

तथा च प्रमेयद्वित्वात् प्रमाणद्वित्वविचारे प्रमेयकमलमार्त्तण्डे प्रभाचन्द्रसूरिणा "प्रत्यक्षेतरभेदात्" (प्रमेयकमलमार्त्तण्डधृतपरीक्षामुखद्वितीयसमुद्देश--द्वितीय सूत्र०) इति सूत्रव्याख्यानावसरे स्पष्टमुक्तं--"प्रमेयद्वैविध्यात् प्रमाणस्य द्वैविध्यमेवेत्यप्यसम्भाव्यं, तद्द्वैविध्यासिद्धेः, एक एव हिं सामान्यविशेषात्मार्थः प्रमेयः प्रमाणस्य इत्यग्रे (४र्थ अध्याये) वक्ष्यते इति। तदेतदार्हतमतसिद्धसिद्धान्ततो ग्रन्थोऽयं बौद्धदार्शनिकानां नतु जैनानामिति चाविमर्शं परामृष्यते।

विशेषतश्च प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धिभेदेन प्रमाणषट्कस्थापनावसरे कौमारिलश्लोकवार्त्तिके बौद्धसिद्धान्तोपरि परिलक्ष्यते सुतीक्ष्णः कटाक्षनिक्षेपः। कुमारिलसमसमयो धर्मकीर्त्तिरपि तदानीं भूटानराज्ये प्रमाणवार्त्तिकं प्रणिनाय।

धर्मकीर्त्तेरनन्तरमपि केचिद् भिक्षवः कुमारिलकृतमाक्षेपमक्षममाणास्तं प्रतिक्षेप्तुं प्रत्यक्षपरोक्षभेदेन प्रमाणद्वयसंरक्षणदक्षतामभीक्ष्णमीक्षयितुं बद्ध परिकरा बहुविधं निबन्धं बबन्धुरिति प्रमाणान्तर्भावग्रन्थमिदानीमासाद्य प्रतीयते।

प्रमाणान्तर्भावं च प्रमाणवार्त्तिककीर्त्तितपथगतस्तथागतोऽनवगतनामधामसमयः कश्चिद्विपश्चिद् व्यरचयदिति प्रमाणान्तर्भावीयप्रतीकं वीक्ष्यापि प्रतीयते।

तथाच "यच्च साक्षादुपलभ्यते तदेवास्ति, उपलम्भ एव सत्तेति प्रतिपादनात्" (प्रमाणान्तर्भाव–पृ: १ पं १२) धर्मकीर्त्तिकीर्त्तिस्तम्भे प्रमाणवार्त्तिके अनुपलब्धिचिन्तायां प्रारम्भ एव "दृश्यानुपलब्धिफल" मित्युपक्रमे तथागतमनोरथसारथिना मनोरथेन वृत्तिकृता टिप्पनीकृता चापरेण विभिन्नप्रतीकद्वयेन समभिहितम्-

(१) अप्रवृत्तिः प्रमाणानामप्रवृत्तिफलासति।
असज्ज्ञानफला केचिद्धेतुभेदव्यपेक्षया॥

इति श्लोकव्याख्यायां "सज्ज्ञानशब्दव्यवहाराणा" मित्यादि वृत्तिकारोपरि टिप्पन्यां यथा--"उपलब्धिः कर्मधर्मश्चैद्वस्तुयोग्यता, कर्त्तृधर्मश्चेज् ज्ञानम्। उपलब्धिः सत्त्वमेव। असताञ्चानुपलब्धिरसत्त्वम्" इत्यादि।

(२) अपि च--"ननु स्वभावानुपलब्धौ कथं तादात्म्यं प्रतिबन्ध इत्याह--
तत्रोपलभ्येष्वस्तित्वमुपलब्धेर्न चापरम्।
इत्यज्ञज्ञापनायैकानुपाख्योदाहृतिर्मया॥ इति। (प्र० वा० ४।२६३)

तत्रोपलभ्येषु भावेषु विचार्य्यमाणमस्तित्वमुपलब्धेरपरं न भवति। यदि ह्युपलब्धिः कर्मधर्मस्तदोपलभ्यमानतास्तित्वम्। अथ कर्त्तृधर्मो ज्ञानम्। तदा तदन्वय-व्यतिरेकानुविधानाद् भावसत्ताव्यवस्थानस्य उपचारात् सैव सत्ता। तथाचोपलब्धिरेव सत्ता, तथानुपलब्धिरेवासत्ता इति तादात्म्यमनयोः सम्वन्धः" इति। (मनोरथवृत्तिः)

किञ्च मङ्गलाचरणश्लोके--"सत्तार्थं वा विधातुं" इत्यंशेनापि निर्विमर्शं मर्शयितुं शक्यते शाक्यानामेवेयं कृतिरिति।

प्रमाणान्तर्भावे प्रथमपरिच्छेदे (पृः ४ पं २) यदुल्लिखितं----------
"अनुमानं हि तादात्म्य-तदुत्पत्तिसमन्वयात्"
इति च--"कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमो दर्शनान्न न दर्शनात्--॥(प्र० वा० ३।३०)--इत्यादि बौद्धमतं स्मारयति। अर्थात् पूर्व्वपक्षरूपेणोत्तरपक्षरूपेण च यत्र यत्र ये ये श्लोकाः समुद्धृता लिखिताश्च तत्र तत्र मीमांसकमतस्य तथागतमतस्यैव पदार्थतत्त्वस्फुरणात् मीमांसकानां बौद्धानां च पारिभाषिकशव्दप्रयोगाच्च सहमीमांसकैर्युद्धाय सन्नद्धा बौद्धा इत्येव बुद्धाववभासत इतितूक्तप्रायम्।

वौद्धास्तु निर्विकल्पकमेव प्रत्यक्षमङ्गीकुर्वन्ति न तु सविकल्पकम्। जैननये च सविकल्पकस्य प्रत्यक्षत्वमीक्ष्यते। इत्थं च "सविकल्पकतो नेदं प्रत्यक्षमनुमा पुनः" इत्यपि (प्रमाणान्तर्भावः पृः १३ पं १२) सुविशदः सौगतसंवादः।

प्रमाणान्तर्भावे च ग्रन्थे प्रतिलिपिकारेण श्लोकसंख्या नोल्लिखिता। क्रमिकलेखप्रवाहपतिते श्लोकपादावसाने मिथः पूर्वोत्तरश्लोकसम्बन्धमसम्वन्धं चाविचार्य्य क्वचित् (।) इत्यर्द्धावसानचिह्नं क्वचन वा तथैव (।।) इति तु श्लोके पूर्णावसानचिह्नं दत्तम्। एकमात्रमादर्शपुस्तकं च यथा लिप्तं तथैव संरक्षितुं नास्माभिस्तत्र किमपि कृतम्।

वार्द्धक्यवशात् दृष्टिदौर्वल्यादत्यन्तास्वस्थतया च न हीच्छानुरूपं कार्यमस्मा-भिर्विधातुं शक्तमिति "क्षमासारा हि साधवः" इति विनिवेद्य संक्षिप्तभूमिका ह्यत्रैव परिसमाप्यते। समधिकमन्वेष्टव्यं परिशिष्टेऽवशिष्टम्। इति शम्।

"दर्शनश्री"
वाचस्पति पाड़ा रोड
दक्षिणेश्वर
कलिकाता-५७
माघीपूर्णिमा, १८८९ शाके।

**श्री सतीन्द्र चन्द्र भट्टाचार्यस्य**

# भूमिका परिशिष्टम्

ग्रन्थस्यास्य भूमिकायामन्ते परिशिष्टेऽवशिमन्वेष्टव्यमित्युक्तमिति किञ्चिद्वक्तव्यावशिष्टं ग्रन्थकारविषये वहुविधसन्दिग्धविषयसमाधानशेवार्य्यार्थं भवेदिति वुद्धचा प्रस्तूयते ।

प्रमाणान्तर्भावग्रन्थप्रारम्भे "यस्य प्रज्ञाप्रकाशः" इत्यादिमङ्गलाचरण श्लोकस्य तुलनात्मकतया श्लोकान्तरं ग्रन्थान्तरे दृश्यते,––यथा––आचार्य्य दिङ्नाग धर्मकीर्तिमतानुयायी "कर्मगोमी"त्यभिधानो वौद्धो दार्शनिकः प्रमाणवार्तिकस्ववृत्तिटीकाकारो व्याख्यारम्भे एवमाह––

यो विध्वस्तसमस्तबन्धनगतिः सम्यग् वशित्वे स्थितः,
सर्वज्ञेयविसारिनिर्मलतमज्ञानप्रबन्धोदयः ।
सत्तार्थोद्यतमानसश्च सुचिरं श्रीमञ्जुनाथो विभुः
तन्नत्वा बहुशोऽद्य वार्त्तिकगतं किञ्चिद् विवक्षाम्यहम ।।

भगवतः पूजा द्विधा,––स्तोत्रतः प्रणामतश्च । स्तोत्रमपि स्वार्थसम्पत्तितः, परार्थसम्पत्तितः, परार्थसम्पदुपायतश्च त्रिधा । स्वार्थसम्पन्नश्च परार्थं प्रति समर्थो भवतीति प्रथमं स्वार्थसम्पदुक्ता । स्वार्थसम्पच्च कायत्रयलक्षणा । आवरणप्रहाणविशेषेण, गाम्भीर्य्यविशेषेण, औदार्य्य विशेषण च । तदेवमर्थं मनसि निधाय दिङ्नागीयप्रमाणसमुच्चयसारसङ्कलनप्रवृत्तो धर्मकीर्त्तिः प्रमाणवार्त्तिकाविरचनवेलायामादौ ग्रन्थसमाप्ति परिपन्थिविघ्नव्रातविघातायकृतमिष्टनमस्कारं निववन्ध––

"विधूतकल्पनाजाल गम्भीरोदारमूर्त्तये ।
नमः समन्तभद्राय समन्तस्करणत्विषे" ।। इति ।

रूटचा तु समन्तभद्रशब्दो महायाने बोधिसत्त्वविशेषे प्रसिद्धः

(टीकायां––कर्मगोमी)

एवं च प्रमाआन्तर्भावे––

यस्य प्रज्ञाप्रकाशः कवलयति जगच्चक्रमेवाकलङ्कः
सत्तार्थं वा विधातुं यदपर उदयी नासमर्थो कलङ्कः ।
अोन्नत्वा स्वार्थसम्पत्सुहितमनुपमो मञ्जुवाग् यो न दीनः
प्रत्यक्षं वानुमावेत्यत उदितमिदं येन तुल्यो नदीनः ।। इति

मङ्गलाचरणश्लोके––"सत्तार्थं वा विधातुं" "तन्नत्वा स्वार्थसम्पत्" "मञ्जुवाग् यो" इत्यादिशब्दप्रयोगदर्शनादत्र ग्रन्थकर्त्तुर्विषये किञ्चिद्रहस्यमैतिहासिकैः सुधीभिर्विभाव्य किञ्चिदालोचनीयं समयादिकं पुरस्कृत्येति वुद्धचा समुद्धृतमेतदिति ।

अस्मिंश्च प्रमाणान्तर्भावग्रन्थे मङ्गलाचरणानन्तरं विषयद्वैविध्यात् प्रत्यक्षमनुमानं चेति प्रमाणद्वयमेव सौगतसम्मतमिति प्रतिज्ञाय मीमांसक सिद्धान्तसिद्धानामर्थापत्त्यादीनामपि

प्रमाणान्तरत्वं जैमिनीयनयने किञ्चिद्युक्तिप्रदर्शनपुरःसरं हृद्यतया प्रतिपाद्य ग्रन्थकारेण तत्पुनरवद्यमेवेत्युपसंहृतमिति शब्दोपमानार्थापत्त्यनुपलब्धिविषयसमालोचनात्मकपरिच्छेद-चतुष्टयानुधावनेन स्पष्टं प्रतीयत इति नात्र वक्तव्यान्तरमधिकमपेक्ष्यते।

अपि चात्र श्लोकवार्त्तिकीयश्लोकोल्लेखवेलायां च वहुषु स्थानेषु पाठपरिवृत्तिः परि-लक्ष्यते। परिवर्त्तनं चेदृशं ग्रन्थकृता स्वीयमनुकूलं किमपि विचिन्त्यविहितमुत पाठान्तरमा-दृत्य तथा कृतमिति निश्चित्य वक्तुं न शक्यते। उभयोस्तुलनात्मकपाठसूच्यामेतद् विशेष-तोऽवगम्यते।

प्रस्तुतेऽस्मिन् प्रथमपरिच्छेदे चतुर्थपृष्ठायां नवमपङ्क्तौ श्लोकः खल्वीदृश एव मुद्रितः यथा—

"धर्मी धर्मविशिष्टश्च लिङ्गीत्येतच्चसाधितम्"
अर्थे धर्मिणि शव्दे च तत्र सिद्धेन साध्यता॥ इति

परन्त्वतीवजीर्णादर्शे अस्पष्टाक्षरतया सन्दिग्धोऽयं पाठ इतीषत् सूचितमपि। मीमांसा-श्लोकवार्त्तिके तु काश्यां चौखाम्वामुद्रिते त्रैलङ्गरामशास्त्रिसंपादिते शव्दपरिच्छेदे ५६ संख्यक-श्लोके पाठस्त्वन्यादृश एव दृश्यते। "धर्माधर्मविशिष्टश्च" इत्यादीति। तदीयश्लोकमूँयामपि तथैव पाठः संरक्षितः। परन्तु "धर्मोधर्मविशिष्टश्चेति" खुज्यते। तदिदानीं बौद्धसिद्धान्ता-नुसारेण प्रमाणसमुच्चयोक्तं दिङ्नागमतमत्र स्मर्य्यते—

"केचिद धर्मान्तरं मेयं लिङ्गस्याव्यभिचारतः।
सम्वन्धं केचिदिच्छन्ति सिद्धत्वाद् धर्मधर्मिणोः॥
लिङ्ग धर्मे प्रसिद्धं चेत् किमन्यत् तेन मीयते।
अथ धर्मिणि तस्यैव किमर्थं मानुमेयता॥
सम्वन्धेऽपि द्वयं नास्ति षष्ठी श्रूयेत तद्वति।
अवाच्योऽनुगृहीतत्वान्न चासौ लिङ्गसङ्गतः॥
लिङ्गस्याव्यभिचारस्तु धर्मेणान्यत्र दृश्यते।
तत्र प्रसिद्धं यद्युक्तं धर्मिणं गमयिष्यति॥ इति॥

प्रमाणान्तर्भावेऽप्यन्यत्रोक्तम्—

अनुमानं हि तादात्म्यतद्युत्पत्तिसमन्वयात्।
धर्मे धर्मविशिष्टेहि तत्प्रवृत्तिमदीक्ष्यते॥

(प्रमाणान्तर्भावे पृः ४, पं २, ३,)

एतद्ग्रन्थप्रतिपाद्यविषयपरिपुष्ट्ये ये ये च वौद्धसम्मताः परिभाषिकाः शव्दाः व्यवहृताः सकृदपि तदुपरि परिप्रेक्षया वौद्धदार्शनिकसिद्धान्तविदा एवायं विरचितो ग्रन्थ इति भूमिकायां समालोचितमपि किञ्चिदसकृत् प्रदश्यते।

"ज्ञाने यत्सत्त्वविज्ञानं" (२३ पृः अन्त्यश्लोके) इत्यनेन उपलब्ध्यपरपर्य्यायस्य ज्ञानस्य सत्तायाश्चाभेदः "उपलम्भ एव सत्तेति प्रतिपादनादितिप्रतीकेन (पृः १ पं १२) प्रतिपादितः। प्रमाणवार्त्तिकतः प्रमाणमुद्धृत्य चैतत् प्रदर्शितम्। एवं "स्वभावहेतुरेवं" २१ पृः—, "रूपत्रयप्राप्तेः" २२ पृः—, "अन्यापोहेन भाषते" इत्यादिकञ्चिदिग् दर्शनतया प्रदर्शितम्।

तदित्थं सम्प्रदायभेदभिन्नानां वौद्धानां प्रमाणप्रमेयादि वोधसुविधाविधानाय तेषां च परम्परं मतभेदं विचारचातुर्य्यं च कथञ्चित् किञ्चिदवगन्तुं, प्रमाणान्तर्भावे च ग्रन्थे कीदृशश्च किमीयः साम्प्रदायिको वादः प्रतिपादित इति चाववोद्धचं, वौद्धदर्शनीयसामान्यज्ञानवुवोधयिषया वौद्धानां पदार्थजाते विवदमानानामपि विभिन्नमभिप्रायञ्चाकलय्य संक्षेपतः चतुर्विध वौद्ध-सम्प्रदायकथा प्रदर्श्यते चाग्रे, ग्रन्थाङ्गसङ्गततया नेतदसङ्गतं भवेदिति मत्वा।

वासना संवृति प्रभृति पदविन्यासरहस्यमपि चिन्तनीयम्। वासना हि पूर्वविज्ञान जनिता तदुत्तरज्ञाने शक्तिः, क्षणपरम्पराप्राप्ता मानसी प्रतीतिरिति षड्दर्शनसमुच्चये गुणरत्नः ३१ पृष्ठायाम्।

संवृतिः—संवृतिरविद्या कल्पनामात्रमिति यावत्।
सांवृतेषु—कल्पनाविषयेषु (प्रमाणवार्त्तिक—४।१८२)

तथागतपथगतस्तथागतगतानुगतिक परस्परासम्तत्सम्पन्नः कश्चिद् विपश्चिदनिश्चितनामधामा व्यरचयदिमं प्रमाणान्तर्भावाभिधानं कञ्चन ग्रन्थमिति भुमिकायामस्माभिर्यथाज्ञानं यथाशक्ति च युक्तिप्रमाणादिभिः समालोचितम्। सिद्धान्तितं च वौद्धविद्वद्प्रणीतो वौद्धदर्शनीयः खल्वयं ग्रन्थ इति।

ते च वौद्धाश्चतुर्विधाः—सौत्रान्तिक-योगचारवैभाषिक माध्यमिकभेदाल्लोकप्रसिद्धाः।

(१) तत्र सौत्रान्तिका वाह्यार्थवादिनः। एतन्मते ज्ञानं वाह्यवस्तुनः सत्ता चानुमानेन ज्ञायेते। "विज्ञानं, वेदना, संज्ञा, संस्कारः, रूपं" चेति पञ्चस्कन्धाः। सचेतनाः अचेतना वा परमाणुप्रचयविशेषा एव ते। सन्ति च कानिचिदपराण्यपि पञ्च व्यवहारसिद्धानि प्रमाणसिद्धानि चेति वस्तूनि। संज्ञामात्रं प्रतिज्ञामात्रां संवृतिमात्रं, व्यवहारमात्रमित्यादिकानि। तदुक्तं षड्दर्शन समुच्चये—कानि तान्यपराणि पञ्च? अतीतोऽध्वा, अनागतोऽध्वा, सहेतुको विनाशः, आकाशं पुद्गलश्च। पञ्चस्कन्धा एव परलोकगामिनो न पुनरात्मानः परेषामभिमताः।

नामतो वौद्धभेदनिर्देशं विना सामान्यतो वौद्धमते चैते द्वादश पदार्था गुणरत्नेन प्रदर्शिताः,

पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्।
धर्मायतनमेतानि द्वादशयेतनानि च।। इति।

तदेवं सौत्रात्तिकमतेन चत्वारि दुःखादीनि तत्त्वानि सामान्यतश्चायतनरूपाणि द्वादश तत्त्वानि प्रदर्शितानि। दुःखादीनि च चत्वारि—दुःख-समुदय-मार्ग-निरोधलक्षणानि तत्त्वानि। तत्र दुःखाख्यं तत्त्वम्—

दुःखं संसारिण स्कन्धास्ते च पञ्च प्रकीर्तिताः।
विज्ञानं वेदना संज्ञासंस्कारो रूपमेव च।। इति।

समुदयतत्त्वं च—

"समुदेति यतो लोके रागदीनां गणोऽखिलः।
आत्मातमीयभावाख्यः समुदयः स उदाहृतः।।

मार्गतत्त्वं निरोधतत्त्वं च—

क्षणिकाः सर्वसंस्कारा इत्येवं वासना यका।
स मार्ग इह विज्ञेयो निरोधो मोक्ष उच्यते ।।

(षड्दर्शन. स. वौ. ५-७)

गुणरत्नेनाप्येतत् प्रपञ्चितम्। चत्वारि दुःखादीन्यार्य्यसत्यानि पुनस्तत्त्वानि। आराद् दूरात् याताः सर्व्वहेय धर्मेभ्य इत्यार्य्याः, पृषोदरादित्वाद् रूप सिद्धिः। सतां साधूनां पदार्थानां वा यथासम्भवं मुक्तिप्रापकत्वेन यथावस्थितवस्तुरुपचिन्तनेन च हितानि 'सत्यानि'। अथवा— सद्भ्यो हितानि सत्यानि।

सूत्रान्तशब्दात् तद्धितप्रत्ययनिष्पन्नं शौत्रान्तिक मित्यभिधानम्। वौद्धाभिमतं सूत्रं विशेषणस्तस्य टीकां व्याख्यां च समवलम्व्य तत्र तत्र निर्भरतया सौत्रान्तिक नाम्ना लोकप्रसिद्धोऽयं सम्प्रदायः। एतमते निरोध नामकं तत्त्वं मोक्षापरपर्य्यायरूपम्, चित्तस्य निःक्लेशावस्थारूपो निरोधोमुक्तिरिति। नैरात्म्यभावनातो ज्ञानसन्तानोच्छेदो वा मोक्षः।

(२) योगाचारास्तु मुख्यतया विज्ञानवादिनः। वाह्यं च वस्तु नास्त्येवेति वाह्यशून्यत्ववादिनश्चैते। अन्तर्विज्ञानवादितया एत एव खल्वात्मख्यातिवादिनः। विज्ञानादतिरिक्तं नास्त्येव कश्चिदात्मपदार्थः, विज्ञानमेवात्मा, विज्ञानमात्रमिदं भुवनम्। ज्ञानाद्वैतस्यैव तात्त्विकत्वात्। अनेके खल्वात्मसन्तानाः। विज्ञानस्कन्ध एव पूर्वसंस्कारपराधीनः तेन तेन घटपटकटमठकमठादिविषयाकारेण परिणमन् वाह्यवत् प्रतीयते।

योगसाधनाचारविचारपरायणतया खल्वेते सार्थाभिधाना योगाचारा इति। विज्ञानवादिवौद्धानां योगाचारभूमिशास्त्रे सप्तदशभूम्यात्मने योगमार्गानुकूलाः सप्तदशभूमयो योगसम्वन्धिन्यो वर्णिताः। आलयविज्ञानविशुद्धिरेवापवर्गः ।।

(३) माध्यमिकास्तु न सर्वास्तित्वमङ्गीकुर्वान्ति नापि निषिध्यन्ति। विज्ञानं वाह्यं च वस्तु न पूर्णतया वास्तवं, नापि काल्पनिकमपि। तदद्धा मध्याध्वानमवलम्वमाना नाम्ना माध्यमिका उच्यते। एते हि शून्यवादिनः। स्वप्नोपमः प्रमाणप्रमेययो प्रविभाग इति मन्यन्ते। अतः बाह्यमान्तरं च सर्वमसत्यमिति तेषां सिद्धान्तं। वाह्यमाभ्यन्तरं चेति घटादिवस्तूनां रूपंद्वयम्। वाह्यरूपेण घटादयो व्यवहाराय भवन्त्युपयुक्ताः। विषयेन्द्रियसम्वन्धे यति तादृशेन्द्रियसम्बद्धमनोवद्धमान्तरं रूपं ज्ञानमित्यभिधीयते।

मुक्तिस्तु शून्यता दृष्टेः, तदर्थं शेष भावना।

(४) वैभाषिकास्तु वाह्यार्थप्रत्यक्षवादिनः। आन्तरं च पदार्थतत्त्वमङ्गीकुर्वन्ति। सौत्रान्तिकमते वाह्यस्यानुमेयत्वं, एतन्मते च प्रत्यक्षत्वमिति सत्यपि मतभेदे ते चोभये सर्वास्तित्ववादिन इत्याख्ययापि प्रख्याताः। एतन्मतेऽपि सौत्रान्तिकवत् रूप-विज्ञान-वेदना-संज्ञा-संस्काररूपाः पञ्चान्तराः स्कन्धाः। वाह्याश्च चतुर्विधाः परमानवः।

चतुःक्षणिकं वस्तु। जातिर्जनयतिः। स्थितिः स्थापयति। जरा जर्जरयति। विनाशो विनाशयति। तथातमापि तथाविध एव। पुद्गलश्चासावभिधीयते। निराकारो वोधेऽर्थ-सह भाव्येकसामग्रचधीनस्तत्रार्थे प्रमाणमिति। इदमत्रावधेयम्—शाक्य-भिक्षु-निर्ग्रन्थक-संसार-मोचकादयोपि नामतः सुप्रसिद्धा वौद्धाः। प्राचीनानामेतेषां" समुल्लेखः सांख्यकारिकायां (५म श्लोकव्याख्याने) वाचस्पतिमिश्रेण कृतः।

सर्वदर्शनसंग्रहे च सायनमाधवीये संक्षेपतो विवेकविलाससम्मतं वौद्धमतमित्थं प्रदर्शितं यथा––

वौद्धानां सुगतो देवो विश्वं च क्षणभङ्गुरम् ।
आर्य्यसत्याख्यया तत्त्वचतुष्टयमिदं क्रमात् ।।१।।
दुःखमायतनं चैव ततः समुदयो मतः ।
मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः ।।२।।
दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्तिताः ।
विज्ञानं वेदनासंज्ञा संस्कारो रूपमेव च ।।
प्रत्यक्षमनुमानं च प्रमाणद्वितयं तथा ।
चतुष्प्रस्थानिका वौद्धाः ख्याता वैभाषिकादयः ।।७
अर्थो ज्ञानान्वितो वैभाषिकेण वहु मन्यते ।
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न वहिर्मतः ।।८
आकारसहिता बुद्धिर्योगाचारस्य संमता ।
केवलां संविदं स्वच्छां मन्यन्ते मध्यमाः पुनः ।।९
रागादिज्ञानसन्तानवासनोच्छेदसम्भवा ।
चतुर्नामपि वौद्धानां मुक्तिरेषा प्रकीर्तिता ।।१०।। इति ।
मीमांसा-श्लोकवार्त्तिके भट्टपादैरप्युट्टङ्कितम्––
तत्रार्थशून्यं विज्ञानं योगचाराः समाश्रिताः ।
तस्याप्यभावमिच्छन्ति ये माध्यमिकवादिनः ।।
तत्र बाह्यार्थशून्यत्वं तुल्यं तावददए द्वयोवपि ।

(श्लोक. वा. निरालम्ववाद-१४।२२० पृः)

केचिदेवमपि वौद्धमतं श्लोकेनाहुः––

अर्थो ज्ञानसमन्वितो मतिमता वैभाषिकेणोच्यते,
प्रत्यक्षो न हि वाह्यवस्तुविस्तरः सौत्रान्तिकैराश्रितः ।
यौगाचारमतानुगैरभिमता साकारवुद्धिः परा,
मन्यन्ते वत मध्यमाः कृतधियः स्वस्थां परां संविदम् ।।

(षड़द, स. ४७ पृः)

"तेन रुपत्रयप्राप्तेरनुमानं न संशयः" इति प्रमाणान्तर्भावे (२२ पृः) उक्तम् । त्रिरुपं हि लिङ्गं लिङ्गिनमालिङ्गतीति सुगतसमरः ।

तदुक्तम्––

"हेतोस्त्रिष्वापिरुपेषु निश्चयस्तेनवर्णितः ।
असिद्धविपरीतार्थव्यभिचारि विरुद्धतः ।। इति ।

(विपक्षत इति पाठान्तरम्)

अयमाशयः, हेतोःपक्षधर्म्मत्वं इति प्रथमं रूपमसिद्धत्वव्युदासाय। द्वितीयं च सपक्ष सत्त्वमिति विरुद्धत्वव्यवच्छेदार्थम्। विपक्षासत्त्वमिति तृतीयं रुपं अनैकान्तिक दोष निरासाय। दिङ्नागीयमतमनुसृत्य प्रमाणान्तर्भावकारेण "तेन रूपत्रयप्राप्तेरनुमानं" इति यदुक्तं हरिभद्र गुणरत्नादिभिरभिहितवचसा किञ्चिदत्र प्रपञ्च्यते––।

त्रिरूपाल्लिङ्गतो लिङ्गिज्ञानं त्वहुमानसञ्जितम् (षड्द. समु. वौद्ध. धरमश्लोक)

पक्षसत्त्व सपक्षसत्त्व विपक्षासत्त्व-रूप-रूपत्रय विशिष्टं हि लिङ्गं भवति लिङ्गिनो गमकम्। एवञ्च त्रिरूपं त्रिस्वभावमिति फलितोह्यर्थः।

स्वार्थे परार्थे वा सर्वत्रैवानुमाने हेतोरीदृशं त्रैरूप्यं समपेक्ष्यते। अनु पश्चात्, लिङ्ग-ग्रहणादनन्तरमितियावत्, यत् परोक्षना लिङ्गिनो वस्तुनो ज्ञानं तदनुमानसित्यनुमानार्थः।

त्रिरूपेण कुत्रविदुपलव्धेन लिङ्गिना धूमादिना परोक्षं वस्तु लिङ्गिरूपं वह्न्यादिकं तत्र वर्त्तमानं सद्विज्ञायते––तदिदं तादृशात् लिङ्गाल्लिङ्गिनो ग्रहग्र मनुमान मित्याम्नायते। तदिदं द्विविधम्––स्वार्थपरार्थभेदात्।

स्वार्थं च यदा स्वयमेव त्रिरूपेण लिङ्गेन लिङ्गिनं साध्यं प्रत्येति तदा तादृशं तदनुमानं स्वार्थम्।

परार्थं च––

यदा हि परप्रतिपत्त्यर्थं निरुक्तत्रिरूपं लिङ्गं प्रयुक्षते तत्।
तवे त्रिरूपं लिङ्गं त्रिविधं,––अनुपलद्धि––स्वभाव––कार्य्यभेदात्।

मूलभेदव्यपेक्षया च चतुर्धा भवत्यनुपलद्धिः––विरुद्धोपलव्धिः, विरुद्धकार्योपलव्धिः कारणानुपलव्धिः, स्वभावानुपलव्धिश्चति।

(१) विरुद्धोपलव्धिः यथा––नात्र शीतस्पशौ वह्नेः।
(२) विरुद्धकार्य्योपलव्धिः, यथा––नात्र शीतस्पशौ धूंात्।
(३) कारणानुपलव्धिः, यथा––नात्र धूमो वह्न्यभावात्।
(४) स्वभावानुपलव्धिः, यथा––नात्र धूमः उपलव्धिलक्षणप्राप्तम्यानुप लव्धेः।

स्वभावहेतुर्यथा––वृक्षोणयं शिंशपात्वात्। कार्यहेतुर्यथा––अत्र वह्निर्धूमात्। अत एवोक्तम्––"रूपानि पक्षधर्मत्मं सपक्षे विद्यमानता। विपक्षे नास्तिता हेतोरेवं त्रीणि विभाव्यताम्" (इति ष. द. स. ११)॥ व्यास्त्युपेतं पक्षधर्मतोपसंहाररूपं सौसटतरपुमानमाम्नायि।

अन्यापोहचिन्तायां––

"शव्दोऽर्थांशकमाहेति तत्रान्यापोह उच्यते।
आकारः स च नार्थेऽस्ति तं वदन्नर्थभाक् कथम्॥

शव्दोऽर्थांशकमाहेति प्रश्ने तत्रान्यापोहोऽतत्कार्य्यव्यावृत्तिः सर्वविशेषसम्वन्धिनी वाच्यतयोच्यते। अतोऽथांशातमन्यन्यापोहे गृहीत सङ्केतः शव्दाद्युच्चरितार्थं प्रतीत्य तत्र प्रवर्त्तित इति।

(प्रमाणवार्त्तिक २य परिच्छेद––१६७–१६८ पृः)

अपूर्वोऽयमन्यापोहवादो वौद्धानां सिद्धान्तसंरक्षणे। अपोहशब्दमन्यापोहशब्दं वा समधिकृत्य किञ्चिद्वस्तुसंस्थापने निःसन्दिग्धं प्रतीयते वौद्धानामेवायं पक्ष इति। अत-एवापोह बादमधिकृत्यास्मिन् ग्रन्थे विषयपर्य्यालोचनया नार्हतीयानामयं ग्रन्थ इति सहजतः प्रतीत्यर्थं जैनैरपोहवादः विभिन्ने तदीयदार्शनिके ग्रन्थे खण्डनदृष्ट्या प्रदर्शित इति गोचरीकर्त्तुं तद्वादे जैनमीमांसकादिमतं किञ्चित् प्रसङ्गायातमुपदर्श्यते—।

अन्यापोहः—सौगता हि विधिरूपं सामान्यं (जातिं) नाङ्गीकुर्वन्ति। किन्तु अपोह-रूपं तत्। अपोहस्तातद्व्यावृत्तिः। यतो हि अतद्व्यावृत्तिरेव सर्वानुगता शब्दार्थ इति। नीलत्वादिश्च धर्मो, (पराभिमतो जातिरूपः) नीलव्यावृत्तिरूप एव। एवमेव गोत्वमपि खल्वगोव्यावृत्तिरूपं सामान्यं शब्दार्थः।

तदुक्तमुक्तापोहवादमधिकृत्य मीमांसाश्लोकवार्त्तिके—

अगो निवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम्।
गोत्वं वस्त्वेव तैरुक्तमगोपोहगिरास्फुटम्॥
भावान्तरमभावो हि पुरस्तात् प्रतिपादितः।
तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम्॥

(श्लोक वा. अपोहवाद—१-२)

कौमारिलमते तु—

कस्मात् सास्नादिमत्स्वेव गोत्वं यस्मात् तदातमकम्।
तादात्म्यमस्य कस्मात् चेत् स्वाभावादिति गम्यताम्॥

(श्लोकवार्त्तिक—आकृति—४७)

अतीव विस्तृतरूपेणोहापोहपुरःसरं प्रमेयकमलमार्त्तण्डग्रन्थे खण्डितोऽयमपोहवादः। न्यायावतार सूत्रवार्त्तिकवृत्तौतु सिद्धसेनानुयायिना शान्त्याचार्य्येण प्रसङ्गादपोहवादखण्डन-प्रसङ्गेनैवमुक्तम्—नाप्यन्यापोहः, स हि पर्य्युदासरूपो वा स्यात्? प्रसज्यरूपो वा? प्रथम-पक्षे वस्त्वन्तरमेव स्यात्। तच्च सामान्यं वा विशेषोवेति विधिरेव शब्दार्थः स्यात्। द्वितीये तु निषेधमात्रमेव प्रतिपाद्यते, तस्य च शब्दाद्यर्थत्वमयुक्तं, अप्रतीतेः।

तथा हि परप्रतिपादनार्थं तस्य प्रयोगः, परस्तु नीलाद्यर्थी नानीलनिषेधमात्रं जिज्ञासति। प्रतिपादकोऽपि तथैव प्रतिपादयति। अजिज्ञासितं प्रतिपादयन्नप्रेक्षापूर्वकारी स्यात्।

तथा सर्वप्रमेयादि शब्दनामसर्वादेरभावादपोह्याभावेनापोहवाचकत्वं न स्यात्। अपि चापोहः किमाश्रितोऽनाश्रितो वा? अनाश्रितत्वे न कस्यापि। आश्रितत्वे गुणो वा स्यात् सामान्यं वा भवेत्।

तथा हि यदि प्रतिव्यक्त्यनेकस्तदा गुणः, अथैकस्तदा सामान्यमिति। (न्याया. वा. वृ. ९६-९७ पृः) अलमधिकेनेतिशम्—॥

जेसलमेरतः प्रतिलिप्यानीतपुस्तके अन्तभागे आदर्शपुस्तकस्याकारपरिचयं एवं प्राप्तः। तत्र गुर्जरभाषा मिश्रिता वर्त्तते। यथादृष्टं लिखितं तु तदित्थम्—।

जेसलमेर वड़ा भण्डार—ह. प्र. नं ६

साइज—१२ १११॥
२
२॥

पा. नं—नं ५१ ,—६७ , दरेक पुठी ऊपर तथी ६ लिटी,

दरेक लिटी वे टुकड़े ३ ५
१८ग्रं २८ग्रं

दक्षिणेश्वर
वाचस्पतिपाड़ा रोड
कलिकाता-५७

वशंवदः
**श्री सतीश चन्द्र न्यायाचार्य्य भट्टाचार्य्य**

## ग्रन्थस्य संक्षिप्तविषयसूची ।

### प्रथमपरिच्छेदे



### द्वितीयपरिच्छेदे

## तृतीयपरिच्छेदे



## चतुर्थपरिच्छेदे

# प्रमाणान्तर्भावः

## प्रथमः परिच्छेदः

यस्य प्रज्ञाप्रकाशः कवलयति जगच्चक्रमेवाकलङ्कः
सत्त्वार्थं वा विधातुं यदपर उदयी नासमर्थोऽ[1]कलङ्कः।
तं[2] नत्वा स्वार्थसम्पत्सुहितमनुपमो मञ्जुवाग्यो न दीनः
प्रत्यक्षं वानुमावेत्यत उदितमिदं येन तुल्यो न[3]दीनः।।
प्रत्यक्षं चानुमानं च प्रमाणमिदमेव हि।
प्रमाणसंप्लवायोगात् प्रमेयद्वयसंगतेः।।
शब्दादिकं प्रमाणं हि भ्रान्तिमात्रात्तदन्यथा।
प्रमाणलक्षणायोगात् प्रमाणाभं बहिः[4]स्थितेः।।

न भ्रान्तिमात्रप्रवारितप्रामाण्यः प्रमाणं प्रमाणाभासः[5]। अथ कथंचित् प्रामाण्यमुपपद्यते, तथा सत्यनुमानलक्षणसंभवान्न प्रमाणान्तरं, साक्षात्करणवृत्तं हि प्रमाणं,—तदसंभवे तस्यैव सूचकं, तत्राव्यभिचार[6]प्रसादतः यदेव स्वार्थेऽस्तित्वमवबोधयति तत्प्रमाणमन्यथा संशयविपर्ययादेर्बोधादप्रमाणता[7]। यच्च साक्षादुपलभ्यते तदेवास्ति, उपलम्भ एव सत्तेति प्रतिपादनात्। न तत्र संदेहविपर्ययावनुपलभ्यमान एव तयोर्नियतत्वात्। तस्मादुपलभ्यमस्ति।

यत्र चोपलभ्यमानतायाः साक्षात्करणलक्षणायाः प्रतिबन्धतो निश्चयस्तदपरमस्तीति नियमस्तेन द्वयमेव प्रमाणम्। तत्रार्थापत्त्यादीनां तथात्वाभावादप्रमाणतेति संक्षेपार्थः। अथ सत्तायोगादेवंप्रकाराभावेऽपि तदस्तीति व्यपदिश्यते तदसत्—

उपलभ्यता न यस्यास्ति सत्तायोगगतिः कथम्।
उपलभ्यभावो यस्यास्ति सत्तायोगो वृथा परः।।
अन्यथा खरशृङ्गादेः[8] सत्तायोगो न किं मतः।
अवस्तुत्वान्मोपगच्छेद् वस्तुत्वे तेन किं पुनः।।

---

[1] Ms. ऽकलं कः।
[2] Ms. तन्नत्वा।
[3] Ms. न दीनः।
[4] Ms. वहि।
[5] Ms. प्रमाणाभावः।
[6] Ms. अव्यभिचारः प्रसादतः।
[7] Ms. संशयविपर्ययादबोदादप्रमाणता।
[8] Ms. स्वरशृङ्गादेः।

न च दृश्यस्य वस्तुत्वमुपलम्भ[1]विनाकृतम् ।
उपलम्भे तदेवास्य वस्तुत्वमपरेण किम् ।।
तस्मात्सत्त्वोपलभ्यत्वं प्रत्यक्षाभं[2] तदन्यतः[था] ।।
प्रत्यक्षपूर्वादेवानुमानात्त[त्त]त्प्रमाद्वयम् ।
अन्यथा प्रतिपत्तिस्तु न तस्याव्यभिचारिणी ।।
प्रत्यक्षस्मरणाकारव्यतिरिक्ता च[3] नास्ति धीः ।
असंबद्धा[4] स्मृतिः सर्वा प्रमाणं चेत् प्रमाऽखिला ।।
संबद्धा चेत् तदा दृष्टा तत्र देशे च साऽनुमा ।
सामान्याकारता शब्दादपि सा यदि गम्यते ।।
प्रमाणं[5] तदपि प्राप्तमनुमानवदेव हि ।
तथोपमानार्थापत्त्यादि ततोऽ[6]युक्तं प्रमाद्वयम् ।।
शब्दादेरपि यद्वित्तिः परोक्षार्थस्य विद्यते ।
ततोऽनुमानादेवास्य वित्तिरि[7]त्यतिसाहसा ।।
तथाहि कुरु किञ्चि भावत्त्वं[8]नायां मतिं[9] सदा ।
नवानेन विनार्थेन व्यवहारः प्रसिध्यति ।।
न च वैदिकवाक्यार्थं विना स्वर्गादिसाधन[म्] ।
नास्या[10]प्रमाणता तेन स्वर्गादिफलभागिनः[11] ।।
अथानुमानतः साध्यः परलोको भवत्यसौ ।
नात्र हेतुः क्वचित्सृष्टः संबन्धग्रहणं न हि ।।
सिद्धेऽपि वा परे लोके कर्मणां नियमः कुतः ।
तस्मादागम[12] एवेष्टः स चेदस्त्वनुमा वृथा ।।
परलोकोऽकृतोऽसिद्धस्तत्संबन्ध[13]श्च दृक्कृतः ।
तस्मादागमतः[14] सर्वं परलोकस्य वेदनम् ।।
उपमानादि सर्वं च नानुमालक्षणान्वितम् ।
ततः प्रमान्तरास्तित्वे कथं द्वे एव ते इति ।।

---

[1] Ms. उपलम्भं विना कृतम् ।
[2] Ms. प्रत्यक्षाभकारं तदन्यत् ।
[3] Ms. व्यतिरिक्तावनास्ति धीः ।
[4] Ms. असंबन्धा ।
[5] Ms. प्रमाणन्तदपि ।
[6] Ms. ततो युक्तं ।
[7] Ms. रत्यति साहसा ।
[8] Ms. किंचित्संभावनायां ।
[9] Ms. मति ।
[10] Ms. नात्राप्रमाणता ।
[11] Ms. भागिनी ।
[12] Ms. ततस्मागम एवेष्टव्यः ।
[13] Ms. स्तत्संबन्धस्य ।
[14] Ms. तस्मादावगतः ।

प्रमाणान्तरमनुमानाच्छब्द इत्यन्यथा भण्यते[1]—।
कृतकत्वादिवत्स्वार्थमन्याऽपोहेन भाषते।
उत्क्रमे तत्र संबन्धः परलोके न सिध्यति॥
प्रामाण्यं च विवक्षायामिति पश्चाद्वदिष्यते।
लौकिको व्यवहारस्तु वाक्यार्थविषयः सदा॥
पदेन व्यवहारस्तु न लोकस्य कदाचन।
वाक्यवाक्यार्थयोः स[2]र्गापूर्वत्वाद्योगविन्नहि॥
तस्मादपोहविषयः कथं नाम ध्वनिर्मतः।
अथापि पदतद्वाच्यसंबन्धस्य प्रसिद्धता॥
ततोऽनुमा[नं] संबन्धग्रहणे सति किं न तत्।
तदयुक्तं पदस्यापि न प्रमाणत्वमिष्यते॥
पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते।
अन्विताार्थाभिधानं च सर्वदा कैश्चिदिष्यते॥
विपरीतार्थवाच्यत्वे पश्चात् संबन्धिता कुतः।
उपात्तस्य कुतस्त्यागस्त्यागश्चे[त्त]द्वृथा पदम्॥
अनन्विताार्थाभिधायां दशदाडिमवाक्यवत्।
न नाम व्यवहारः स्यादसंबन्धाददृष्टितः॥
अथापि पश्चात्संबन्धोऽनन्विताार्थेऽपि विद्यते।
वाक्यार्थ एव तत्रापि वाक्यस्यास्तु प्रमाणता॥
संबन्धाग्रहणं तत्र पूर्वमेवोपपादितम्।
तस्मान्न वाक्यवाक्यार्थेऽनुमानं भवितुं क्षमम्॥
पदार्थः सर्व एवेत्थं[3] पदार्थान्तिरसंगतः।
देवकम्बल एवासौ वाक्यार्थः कथमन्यथा॥
अथ प्रकरणापेक्षाप्रतिपत्तिरिहान्यथा।
पदाप्रकरणं नास्ति समप्रकरणे कथम्॥
एवं शब्दान्तरासङ्गे दोषो वाच्यः प्रमाविदा।
समानशब्दान्तरतः कथं नियतवेदनम्॥
न च शब्दार्थसंबन्धस्तदुत्पत्त्यादिलक्षणः।
वाच्यवाचकसंबन्धस्तत्र केवलमिष्यते॥

---

[1] Ms. प्रमाणान्तरमानुमानाच्छाब्दमित्यन्यथा भण्यते—।

[2] Ms. सर्वा। [3] Ms. वात्थ।

न च तस्यानुमानेऽस्ति हेतुभावः प्रमागतः ।
अनुमानं हि तादात्म्यतदुत्पत्तिसमन्वयात् ।।
धर्मे धर्म[1]विशिष्टे हि तत्प्रवृत्तिमदीक्ष्यते ।
तस्मा[द]ननुमानत्वं शब्दे प्रत्यक्षवद्भवेत् ।।
त्रैरूप्यरहितत्वेन तादृग्विषयवर्जनात् ।
तत्र शब्दे कुतो[2] यत्नोऽनुमानत्वप्रसिद्धये ।।
विषयोऽन्यादृशस्तावद्दृश्यते शब्दलिङ्गयोः ।
सामान्यविषयत्वं हि पदस्य स्थापयिष्यते ।।
धर्मी[3] धर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम् ।
अर्थे धर्मिणि शब्दे च तत्र सिद्धेन साध्यता[4] ।।
नहि सिद्धस्य साध्यत्वं धर्मिणः क्वचिदिष्यते ।
अथ साध्यत्वमर्थस्य न ध्वनेः पक्षधर्मता ।।
अथ शब्दोऽर्थवत्त्वेन पक्षः कस्मान्न कल्प्यते ।
प्रतिज्ञार्थैकदेशो हि हेतुस्तत्र प्रसज्यते ।।
पक्षे धर्मिविशेषे हि सामान्यं हेतुरिष्यते ।
शब्दत्वं गमकं नात्र गोशब्दत्वेन लिङ्गता ।।
नहि तेनास्ति संबन्धसिद्धिः सिद्धौ वृथानुमा ।
अथकालान्तरत्वेन युक्तः सोऽर्थः प्रसाध्यते ।।
कालान्तरस्थितिर्नैव **श्रीहर्षादेः** प्रसिध्यति ।
अथ वाक्यार्थ-साध्यत्वं न वाक्यार्थेन योगवित् ।।
पूर्वं तस्यानुमानत्वं कथमेवं प्रसिध्यति ।
तत्र पूर्वार्थसिद्धिर्हि वाक्यादेवोपजायते ।।
न वाक्यस्यानुमानत्वमेवं सिध्यति तत्त्वतः ।
न पदव्यतिरेकेण वाक्यं[5] नाम निरूप्यते ।।
पदार्थेष्वनुमाभाव[6]स्तत्र वाक्यार्थता कुतः ।
तथाच पक्षधर्मत्वं शब्दस्येह निरूप्यते ।।
न क्रियाकर्त्तृसंबन्धादृते संबन्धनं क्वचित् ।
राजा[7] भर्त्ता मनुष्यस्य तेन राजा[8] स उच्यते ।।

---

[1] Ms. धर्मिविशिष्टे ।
[2] Ms. कृतो ।
[3] Ms. अत्र 'धर्मो' इति च संदिग्धलेखो दृश्यते ।
[4] Ms. साध्यते ।
[5] Ms. वाक्यन्नाम ।
[6] Ms. भावो तत्र ।
[7] Ms. राज्य ।
[8] Ms. राहुः ।

वृक्षस्तिष्ठति शाखासु ता वा तत्रेति तस्य ताः।
देशेऽग्निमति धूमस्य कर्त्तृत्वं भवनं प्रति ।।
कार्यकारणभावादौ क्रिया सर्वत्र विद्यते।
नचानवगताकारः संबन्ध[:] कश्चिदिष्यते ।।
नचास्त्यसति संबन्धे षष्ठीतत्पुरुषोऽपि वा।
तस्मान्न[1] पक्षधर्मोऽयमिति शक्या निरूपणा ।।
अन्वयोऽपि च[2] शब्दस्य प्रमेयेण निरूप्यते।
व्यापारेण हि सर्वेषामन्वेतृत्वं[3] प्रतीयते ।।
यत्र धूमोऽस्ति तत्राग्नेरस्तित्वेनान्वयः स्फुटः।
न त्वेवं यत्र शब्दोऽस्ति तत्रार्थोऽस्तीति निश्चयः ।।
भवेन्नित्यविभु[4]त्वाच्चेत्सर्वार्थेषु च तत् समम्।
तेन सर्वस्य दृष्टत्वाद्[5] व्यतिरेकस्य वा गतेः ।।
सर्वशब्दैरशेषार्थप्रति[6]पत्तिः प्रसज्यते।
व्यतिरेकोऽपि शब्दस्य नैवार्थ[7]विषयः क्वचित् ।।
नार्थाभावेऽस्ति शब्दानामभाव इति निश्चयात्
प्रतीतेरिति चेदेषा प्रतिपत्तिर्न सर्वदा ।। ।।
अत्रोच्यते––न युक्तोऽयं पूर्वपक्षः परोदितः।
भावनार्था प्रतीतिर्हि सङ्केतादेव[8] जायते ।।
पदार्थावगति[:] सर्वा न सङ्केतं विना क्वचित्।
व्यञ्जकश्चेत्[9] स संकेतो न प्रतीपोऽन्यथेक्ष्यते ।।
नहि प्रतीपसंबन्धः संकेताद्व्यज्यते क्वचित्[10]।
न[11][हि] प्रत्यक्षतः सिद्धमन्यथा क्रियतेऽन्यदा ।।
प्रत्यक्षेण हि तत्रार्थप्रतीतिरिति युक्तिमत्।
संकेतस्यान्यथाभावे कथमन्यार्थसंगतिः ।।
नानार्थता चेत् सर्वत्र प्रतीतिः[12] संकुला भवेत्।
न च तस्मात् स्वरूपस्य प्रतीतिर्वस्तुनः क्वचित् ।।

---

[1] Ms. तस्मात्र।
[2] Ms. अन्वयोऽनूच।
[3] Ms. मन्वेतृत्व।
[4] Ms. न्नित्यवितुत्वा"।
[5] Ms. दष्टत्वात्।
[6] Ms. प्रतीपत्तिः।
[7] Ms. नैव्यर्थ।
[8] Ms. संकेतावंदेव।
[9] Ms. व्यञ्जकशवे।
[10] Ms. क्वचि।
[11] Ms, न्न।
[12] Ms. प्रतीतिर्हि।

इच्छयाह्य[1]नयात्सर्वो यत्र तत्र प्रवर्त्तते ।
सर्वस्य सर्वसंबन्धे दोषः प्रागेव दर्शितः ।।
संबन्धस्य च या व्यक्तिः संबन्धकथनं हि तत् ।
नापौरुषेये कथनादर्थवत्ता विनिश्चिता ।।
न च प्रमाणं पुरुष उपदेष्टा प्रतीयते ।
अनादिरेष संबन्ध इति सात्व[2] परंपरा ।।
पदार्थस्याप्रसिद्धौ च वाक्यार्थे सत्यता कुतः ।
तथापि स्यात्पदार्थानां विपर्यासो नरोद्भवः ।।
वेदे तु पुरुषाभावाद्विपर्यासक्रिया कुतः ।
नराणामाशयेदुष्टे विपर्यासो हि दृश्यते ।।
वेदस्य[3] न नरः कर्त्ता विपर्यासो[4]ऽस्त्वसौ कुतः ।
अत्रापि परिहारोऽयमुच्यतेऽन्यैर्विलक्षणैः ।।
यथा नात्र विपर्यासः संभवी पुरुषाद्विना ।
अथ स्वाभाविकस्तत्राऽविपर्यासो न कारणात् ।
तथा स्वाभाविकस्तत्र विपर्यासोऽप्यकारणात् ।।
विपर्यासस्तु वेदेऽपि पदार्थानां समीक्ष्यते ।
आत्माकाशादिकस्तत्र पदार्थो[5]ऽसत्य एव हि ।।
अथापि कुरु किंचित्त्वमितिदृग्व्यवहारभाक् ।
प्रमाणान्तरदृष्टोऽर्थस्तत्र तत्र प्रतीयते ।।
ततो निश्चित्य तस्यार्थं प्रवर्त्तन्ते विचक्षणाः ।
वेदे तु न प्रमार्थत्वं कथमत्र प्रवर्त्तताम् ।
स एव तत्र मानं चेत् न तस्यास्ति प्रसिद्धता ।।
अथापि वेदादर्थस्य प्रबोध उपजायते ।
अवेदादपि किं[6] नास्ति किं वा तत्र विशेषणम् ।।
प्रबोधो वा विकल्पेन नादृष्टार्थ[7]प्रकाशकः ।
अदृष्टकल्पनामात्रात्तदस्तीत्यतिसाहसम् ।।
अथापि निश्चितः सोऽर्थ इति तत्र प्रमाणता ।
निश्चयोऽपि न सर्वस्य तस्मादेवोपजायते ।।

---

[1] Ms. इत्सयासनयात्सर्वो ।
[2] Ms. सान्व ।
[3] Ms. वेदस्य हि न नरः ।
[4] Ms. विपर्यसोस्त्वसौ ।
[5] Ms. पदार्थो सत्य ।
[6] Ms. किन्नास्ति ।
[7] Ms. तादृश्यार्थ ।

कस्यचिन्निश्चयादेव प्रामाण्ये सर्वमानता ।
अपौरुषेयतो वाक्यान्निश्चयस्य प्रमाणता ।।
पौरुषेयात्तु[1] वचनादेवं वेदे नियम्यते ।
अपौरुषेयादपि हि नैवमर्थः प्रतीयते ।।
वेदादेव विकल्पार्थ[2]-प्रतीतिरिति तत्त्वधीः ।
पृथग्[3] व्याख्यानतो वेदात् क्वचिन्नार्थः प्रतीयते ।।
एवं व्याख्यातमन्यस्मिन् मयाप्येवमिति स्थितिः ।
अल्पाभ्यासात्तु सर्वत्र निश्चयस्य समागमः[4] ।।
देवदत्तानयेत्यादिवाक्यार्थस्यास्ति दर्शनम् ।
अथापि नास्ति वाक्यार्थे प्रत्यक्षप्रत्ययोदयः ।।
तेन वाक्यैकगम्योऽसावेवं सति न योगवित् ।
ततश्च वाक्य[5]वाक्यार्थसंबन्धग्रहणं कथम् ।।
पदार्थसंबन्धगतौ वाक्यार्थप्रतिपद् यदि ।
संबन्धोऽ[6]स्यास्त्यसत्योऽपि नदीतीरफलादिकः ।।
स तत्र नरयोगाच्चे[7]दत्र नास्तीति का प्रमा ।
पुरुषाभावतस्तत्र सोऽपि नास्तीति का प्रमा ।।
पुरुषाच्च विना तत्र संबन्ध इति साहसम् ।
ततोऽर्थलाभो यदि किमनर्थस्यापि नेष्यते ।।
यथा सम्बन्धिता नास्ति तथाऽसम्बन्धितापि न ।
किं च संकेतकरणे कोऽर्थो वाच्यार्थसंगतेः[8] ।।
तत्किं तस्य [च] सद्भावे वाच्यस्यार्थस्य संभवः ।
अर्थशून्यो न शब्दस्य प्रयोगः स्यात्तथासति ।।
न भवत्यर्थशून्यश्चेत् सर्वत्रार्थस्य संभवात् ।
पदार्थः सर्वदाऽस्त्येव सामान्यं वाच्यमिष्यते ।।
सामान्यं च पदस्यार्थस्तत्र न व्यभिचारिता ।
नैतदस्ति यदा नैवं वाच्यवाचकतेष्यते ।।

---

[1] Ms. पौरुषेया तु ।
[2] Ms. विकल्पार्थं° ।
[3] Ms. किथग ।
[4] Ms. समागमो ।
[5] Ms. वाक्यावाक्यार्थ° ।
[6] Ms. संबन्धोऽस्त्यसत्योऽपि । छन्दोभङ्गभयादत्र "सम्बन्धोऽस्ति ह्यसत्योऽपि' 'इति वा पाठः कल्पनीयः ।
[7] Ms. नरयागश्चेत् अत्र ।
[8] Ms. संगतिः ।

कथं कुतः [1]क्व वेत्येवं संदेहस्यानिवृत्तितः।
सामान्ये[2] नैव संदेह इति चेत् क्व भवेदसौ।।
विशेष इति चेत् कस्मात् तस्य तेन व्यपेक्षणात्।
अर्थादेव स संदेहः पदात् स्वार्थे[3] विनिश्चयः।।
नन्वर्थकृतसंदेहं स्या[द्] वाक्यमप्रवर्त्तकम्।
पदवत्सर्वसंदेहान्न स्याद्वाचकता क्वचित्।।
देवदत्तादिवाक्ये हि तत्पदार्थकदम्बकम्।
स्वकारणादिसापेक्षमिति संदेहविद्भवेत्।।
अभिप्रेते न संदेह[4] इतिवाक्यात् प्रवर्त्तनम्।
अवाचकं पदं प्राप्तमभिप्रेताविनिश्चयात्।।
सामान्यप्रतिपत्तिस्तु विप्लवो व्यक्त्यनन्वये।
न च व्यक्तिविनाभूतसामान्यप्रतिपत्कचित्।।
वर्णसंस्थानभासे च सामान्यस्य न भासनम्।
तदेव च न सामान्यं व्यावृत्तत्वेन तद्ग्रहात्।।
नह्यन्यवर्णसंस्थानग्रहणेऽन्यस्य वेदनम्।
तस्माद्विशेषसंदेह[5] एव सामान्यमीक्ष्यते।।
तस्य संदेहकारित्वे वाच्या[ऽ]संदिग्धता कुतः।
अवाचकं ततो वाक्यं कुतस्तस्य प्रमाणता।।
आत्मादिकपदार्थश्च व्ययायैव[6] [च] दृश्यते।
अपौरुषेय[त]ा पूर्वा[7] [य]दि नामास्ति तत्त्वतः।।
विपरीतार्थसंबन्धो नेति केन प्रतीयते।
नरादसत्यतेत्येवं सत्यतापि नराद् भवेत्।।
स्वतन्त्र एव संबन्ध इति न क्वचिदीक्ष्यते।
अग्निर्हिमस्येति वाक्ये दृश्यमानः कथं न सः।।
दृश्यमानोऽपि नैवासौ सत्यतामधिगच्छति।
न भवत्येष शब्दार्थो भरतारणिशब्दवत्।।
पदार्थनिश्चये हि स्याद् वाक्यार्थस्य विनिश्चयः।

---

[1] Ms. कुवेत्येवं।
[2] Ms. न सामान्येनैव।
[3] Ms. स्वार्थो विनिश्चयः।
[4] Ms. संदेहे।
[5] Ms. संदेहे।
[6] Ms. व्यवायैव।
[7] Ms. पूर्वी।

पदार्थसत्यतायां वा यः प्रतीतः स एव किम् ।
वाक्यार्थः कल्पितो यस्मात् पुरुषैरेव दृश्यते ।।
उन्मत्त[1]वाक्यतो नास्ति संबन्धे सत्यता क्वचित् ।
पण्डितैः कल्प्यते काचित् स्वानुरूपप्रभावतः ।।
उन्मत्तत्वेन संबन्धं न स पश्यति शब्दयोः ।
वेदेऽपि नास्ति संबन्धवेदनाऽत्राप्यसत्यता[2] ।।
उन्मत्तत्वाद् यदा नास्ति तत्र संबन्धदर्शनम् ।
अपौरुषेये सुतरां न संबन्धस्य वेदनम् ।।
स्वाभाविकश्चेत् संबन्धः किं[3] न वेदे प्रकल्प्यते ।
संबन्धस्तत्र नास्तीति वेदेऽपिस्यात्कथं नु सः ।।
तस्मादुन्मत्तवचसि वेदे वाऽसौ न विद्यते ।
नरैः केवलमासाद्य (मापाद्य) इति सिद्धं सम[4]द्वयम् ।।
तस्मान्न शब्दादर्थस्य प्रतीतिः प्रतिबन्धतः ।
प्रतीपादिव नार्थस्य प्रत्यक्षेण प्रतीतता ।।
अप्रत्यक्षप्रतीतिस्तु कथमस्तीति गम्यते ।
किञ्च[5] [व]स्तु न संकेतं विना कस्यचिदीक्ष्यते ।।
तत्रार्थयोगः प्राग् दृष्टः पदार्थान्तिरसंगतः ।
शब्दानां शब्दसंबन्धादस्मिन्नपि तथैव सः ।।
ततोऽनुमानमेवैतदबाह्येऽर्थे प्रवर्त्तते ।
विवक्षा रूढ एवार्थे शब्दप्रामाण्यमप्यतः ।।
वेदेऽपि तत्समानत्वादबाह्यार्थे प्रमाणता ।
अनादिरेष संबन्ध इति सा त्वपरंपरा ।।
ततः प्रतीत्यभावे च न संबन्धः प्रसिध्यति ।
अर्थप्रतीतेः प्रामाण्यं न बाह्येऽर्थे प्रसिध्यति ।।
घुणाक्षरत्ववद्वेदे तन्नार्थस्य प्रसिद्धता ।
अथापि घुणवर्णानां नेयत्ता विद्यते क्वचित् ।।
अतएव हि तत्रापि पौरुषेयत्वमिष्यताम् ।
यथा न घुणवर्णत्वं तथा नापौरुषेयता ।।

---

[1] Ms. उन्मत्ते ।
[2] Ms. संबन्धो वेदाद त्राप्यसत्त्वता ।
[3] Ms. किन्ना ।
[4] Ms. समद्वयम् ।
[5] Ms. किञ्चस्तु । कल्पिस्तु इति वा पाठः । कल्पितस्तु इत्यपि संभाव्यते ।

अपौरुषेयमप्येवं कथं नाम प्रपञ्चवत् ।
ततः कृतक एवायमिति वेदः प्रतीयताम् ।।
पुरुषातिशयासिद्धिर्न तत्रापि प्रमाणता ।।छ।।
विषयोऽन्यादृशस्तत्र य उक्तो लिङ्गशब्दयोः ।
तेनाप्रमाणता शब्दे सर्वथैव प्रसिध्यति ।।
विकल्पविषयत्वं हि शब्दस्येति प्रसाधितम् ।
धर्मी धर्मविशिष्टस्तु साध्य उक्तोऽनुमानतः ।।
शब्दस्यापक्षधर्मत्वे न बाह्येऽर्थेऽस्ति हेतुता ।
नहि धर्मिण्यसिद्धत्वे धूमादर्थः प्रसिध्यति ।।
धर्मिसंबन्धितायां हि प्रत्यक्षेऽपि प्रमाणता ।
न चा[1]धिष्ठानता नैव प्रत्यक्ष [स्य]ा प्रसाधनम्[2] ।।
प्रत्यक्षेऽप्यनुमानत्वं कया[3] वा कलयेष्यते ।
त्रैरूप्यरहितत्वे च न प्रत्यक्षस्य सिध्यति ।।
स्वरूप एव प्रत्यक्षमनुमानत्ववर्जितम् ।
अर्थवत्त्वेन शब्दस्य पक्षत्वपरिकल्पने ।
प्रतिज्ञार्थै[3]क देशत्वं न शब्दत्वे प्रस[4]ज्यते ।।
तथाहि शब्दः शब्दत्वात् पूर्वशब्दवदेव हि ।
समीपार्थेन संबद्धो[5] धूमो धूमतया यथा ।।
गोशब्दत्वमसिद्धं चेत्[6] लता-तालादि वाचिनाम् ।
विशेषार्था प्रसिद्धिः स्यात् तस्माद् युक्ता विशेषता ।।
सामान्येन हि वाक्यार्थसंबन्धः[7] सिद्ध एव नः ।
विशेषेण तु नैवास्ति क्वचित् संबन्धसिद्धता ।।
वाक्यस्यैवानुमानत्वमेवं नास्तीत्यसंगतम् ।
संबन्ध[8]साधकः शब्दो वाक्यमित्यभिधीयते ।।
समुदायस्य धर्मित्वमेकदेशस्य हेतुता[9] ।
संबन्धस्य च साध्यत्वं कस्मान्नास्त्यनुमानता ।।

---

[1] Ms. निचा । 'नैवाधिष्ठानता' इति संभाव्यते ।
[2] Ms. प्रस्नाधनम् ।
[3] Ms. विकलयिष्यते ।
[4] Ms. प्रतिज्ञार्थैक° ।
[5] Ms. प्रसिज्यते ।
[6] Ms. संबन्धो ।
[6] Ms. गोशब्दमप्रसिद्धत्वं चेत् ।
[7] Ms. संबघुः ।
[8] Ms. संबन्धः ।
[10] Ms. हेतुना ।

क्रियाकारकसंबन्धादृते संबन्धनं कथम् ।
राजा भर्त्ता मनुष्यस्य पदं वाक्यस्य पूरकम् ।
वृक्षस्तिष्ठति शाखासु पदं वाक्ये न किं तथा ।।
देशेऽग्निमति धूमस्य कर्त्तृत्वं भवते[1]र्यथा ।
तथा वाक्येऽपि किं नास्ति पदस्येति निरूप्यते[2] ।।
नचानवगताकारः संबन्धो नापि[3] लक्ष्यते ।
तेनास्ति सति संबन्धे षष्ठीतत्पुरुषोऽपि वा ।।
ततश्च पक्षधर्मोऽयं शब्दप्राप्तोऽन्यशब्दवत् ।
अन्वयो न च शब्दस्येत्यादि सिद्धप्रसाधनम् ।।
वाह्यार्थे नान्वयः क्वापि विनार्थं शब्द ई[4]क्ष्यते ।
भवे[5]न्नित्यविभुत्वाच्चेत् सर्वार्थेऽप्यन्वयस्तथा ।।
ततः सर्वार्थसिद्धत्वे सर्वशब्द-समागमे ।
वाच्यवाचकसंबन्ध उक्ते सा त्वपरंपरा[6] ।।
व्यतिरेकोऽपि शब्दस्य नास्तीति प्रतिपादितम् ।
अन्यथा संविदानोऽपि विवक्षत्यन्यथा यतः ।
तस्मादेकान्ततो नास्ति पुं[7]वाक्यात् तद्धियां [8]गतिः ।।
भ्रान्तस्यान्य[9]विवक्षायामन्यद्वाक्यं च दृश्यते ।
यथाविवक्षमित्येतत् तस्मान्नैव प्रवर्त्तते ।।
अभ्रान्तत्वे परिज्ञाते अभ्यासादे[10]र्विकल्पतः ।
समानसमयत्वे च विवक्षार्थः प्रतीयते ।।
लोकस्य व्यवहारोऽयमेवमेव व्यवस्थितः ।
अन्यथा सर्वमेव स्यात् प्रमाणं नेति साधितम् ।।
व्यवहारं विना नास्ति ब्रह्मलोकेऽपि जन्मभाक् ।।
इत्यर्थ[11]सङ्गि व्यवहारसिद्धं, शाब्दं, निजार्थेऽनुमिति [प्रमाणम्] ।
बाह्ये तु नैवास्य परं प्रमाणं यथाकथञ्चिज्जगतामिहास्था ।।

प्रमाणान्तर्भावे शाब्दः प्रमाणान्तर्भावः प्रथमः परिच्छेदः ।।

---

1 Ms. भवते यथा । भवतं यथा ।
2 Ms. निरूप्यतं ।
3 Ms. संबन्धोन्नापि ।
4 Ms. इक्ष्यते ।
5 Ms, भवोन्नित्य॰ ।
6 Ms. वात्वपरम्पग ।
7 Ms. पुम्वाक्यात् ।
8 Ms. धियाङ्गतिः ।
9 Ms. भ्रान्तस्यात्य॰ ।
10 Ms. अभ्यासादे विकल्पतः ।
11 Ms. इत्यर्थसि ।

उपमापि प्रमा कैश्चिदिष्यते व्यक्त[1]बुद्धिभिः।
सादृश्येन परिच्छेदः परोक्षेऽर्थे न तां विना ।।
सादृश्यस्य च वस्तुत्वं न शक्यमप[2]बाधितुम्।
भूयोऽवयवसामान्ये योगो जात्यन्तरस्य तत् ।।
उपमापि हि सादृश्ये परोक्षे वित्तिरीक्ष्यते।
नानुमालक्षणं तत्र प्रथमं सदृशग्रहात् ।।
तस्माद् यत् स्मर्यते तत् स्यात्[3] सादृश्येन विशेषितम्।
प्रमेयमुपमानस्य सादृश्यं वा तदन्वितम् ।।
प्रत्यक्षेणावबुद्धेऽपि सादृश्येन गवि स्मृते।
विशिष्टस्यान्यतोऽसिद्धेरुपमानप्रमाणता ।।
प्रत्यक्षेऽपि यथा देशे स्मर्यमाणे च [4]पावके।
विशिष्ट-विषयत्वेन नानुमानाप्रमाणता ।।
नवै तस्यानुमानत्वं पक्षधर्माद्यसंभवात्।
प्राक् प्रमेयं च सादृश्यं न धर्मत्वेन मीयते ।।
गवये गृह्यमाणं च न गवामनुमा[5]पकम्।
प्रतिज्ञार्थैकदेशत्वाद् गोगतस्य[6] न लिङ्गता ।।
गवयस्याप्यसंबन्धात् न गोर्लिङ्गत्वमृच्छति[7]।
सादृश्यं न[8]च सर्वेण पूर्वं दृष्टं तदन्वयि[9] ।।
एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने[10]।
सादृश्येन सहैवास्मिंस्तदैवोत्पद्यते मतिः ।।

## मीमांसकोपमानम् ।।छ।।

नैयायिका स्त्वन्यथैव[11] वर्णयन्त्यस्य लक्षणम्।
प्रसिद्धेन हि साधर्म्यादुपमा साध्यसाधनम् ।।

---

[1] Ms. व्यक्ष।
[2] Ms. मवबाधितुम्।
[3] Ms. तस्योत्सादृश्येन विशेषतम्।
[4] Ms. यावके।
[5] Ms. मायकम्।
[6] Ms. योगतस्य।
[7] Ms. गीलिङ्गत्वमर्च्छति। नैयायिकोपमानप्रसङ्गे 'मिच्छति' इति पाठो दृश्यते।
[8] Ms. सादृश्यन्त।
[9] Ms. तदन्वपि।
[10] Ms. वनो।
[11] Ms. थैवोपवर्णयंति अस्य लक्षणं।

श्रुतातिदेशवाक्योऽयमीक्षते[1] गवयं यदा।
प्रत्यक्षैव हि सा वित्तिस्तेनायं सदृशो न तु।।
समाख्याया हि संबन्धमपूर्वं प्रतिपद्यते।
अयं स गवयस्तेन तदानीं प्रतिपादितः।।
यथामुद्गस्तथा मुद्गपर्णी माषो यथा परा।
नामनामवतोर्योगे[2] व्यवहारार्थमीक्ष्यते।।
उपमानस्य विषय एवमन्योऽपि गम्यताम्।
अतिदेशवाक्यतो[3]नाम प्रागेवैषा गतिर्भवेत्।।
तथापि न विशेषेण पूर्वं योगस्तथागतः।
उपयुक्तोऽयं[4] मानो हि तुल्यार्थग्रहणे सति।।
विशिष्टविषयत्वेन संबन्धं प्रतिपद्यते।
सविकल्पकतो नेदं[5] प्रत्यक्षमनुमा पुनः।।
त्रैरूप्यरहितत्वेन विशेषः[6] स पुरोदितः।
पिण्डस्य हि विशेषेण संप्रत्येव प्रतीयते।।
संबन्धः संज्ञयेत्येवं[7] नान्वयव्यतिरेकिता।।

## नैयायिकोपमानम्।।

अत्रोच्यते च सादृश्यं प्रत्यक्षेण प्रतीयते।
पुरोद्वयं पश्यतो हि प्रत्यक्षादेव निश्चयः[8]।।
ततः परोक्षे[9] स्मरणमात्रमेवोपजायते।
त[10] एवावयवा यत्र दृष्टिस्मरणगोचराः[11]।।
यदापि न द्वयं दृष्टं तस्यैव स्मरणा[12]त्तदा।
त एवावयवास्तत्र स्मर्यन्ते प्रत्यभिज्ञया।।
प्रत्यभिज्ञानमेतच्च व्यवहारेऽनुमैव न।
तद्रूपदर्शनादेव तत्त्वव्यवहृतिः परा।।

---

[1] Ms. मीक्ष्यते।
[2] Ms. योगे।
[3] Ms. अत्र अक्षराधिक्यात् छन्दोदोषः।
[4] Ms. उपयुक्तोऽय।
[5] Ms. नेदमुप्रत्यक्षामनुमा पुनः।
[6] Ms. विशेष।
[7] Ms. संज्ञायेत्येवं।
[8] Ms. निश्चीयते।
[9] Ms. स्मरणं।
[10] Ms. तत।
[11] Ms. दृष्टिः स्मरणगोचरः।
[12] Ms. स्मरणा तदा।

अनादिव्यवहारोऽयमिति न प्रथमा गतिः ।
प्रत्यक्षं प्रत्यभिज्ञेयं तैरेवाभ्युपगम्यते ।।
अनादिवासनासङ्क्रद्वयं तु व्यवहारिणः ।
अपूर्वं[1] तत्त्वतो नास्ति प्रमेयं व्यवहारतः ।।
प्रामाण्येऽस्याः प्रमाणं हि भवतः सप्रमादकम्[2] ।
अनेनासौ विसदृशः पूर्वस्मादमुकः[3] परः ।।
मध्यमः पृथुरत्यन्तदीर्घः कर्कश इत्यपि ।।
अथ प्रत्यक्षमेवैषानुमानमियमेव[4] वा ।
सादृश्यस्य परिच्छेदे किं प्रमाणान्तरं मतम् ।।
यथा सादृश्यवस्तुत्वं[5] न शक्यमपबाधितुम् ।
प्रत्यक्षत्वमपि प्राप्तं किं शक्यं बाधितुं त्वया ।।
भूयोऽवयवसामान्ययोगो जात्यन्तरस्य यः ।
गवये व्यक्तदृष्टोऽसौ पूर्वं गव्यपि वीक्षितः[6] ।।
यदा[7]ऽवयव सादृश्यं तदाप्रत्यक्षनिश्चितम्[8] ।
[9]तदेव गवयेनापि गोसादृश्यमनूनकम् ।।
एकस्य सदृशत्वं हि न पृथक् संप्रतीयते ।
अपरापेक्षया[10] नैव सादृश्यस्य प्रसिद्धता ।।
अनुमा[11]लक्षणास्तित्वं यथैवोपमितावह[11a] ।
प्रमेयमपि नास्त्येव प्रत्यक्षं यन्न[12] भासते ।।
व्यवहारेतु तस्याः किं [13]नानुमालक्षणान्वयः ।
तस्माद् यत् स्मर्यते तत्स्यात् सादृश्येन विशेषितम् ।।
प्रमेयमुपमानस्य कथं स्मरण[14]संभवि ।
प्रत्यक्षेणावबुद्धेऽपि सादृश्ये गवि च स्मृते[15] ।
विशेषस्यान्यतः सिद्धेरुपमानाप्रमाणता ।।
प्रत्यक्षे तु पुनर्देशे स्मर्यमाणे[16]ऽपि पावके ।

---

[1] Ms. अपूर्वन्तत्वतो ।
[2] Ms. स प्रमादिकम् ।
[3] Ms. अमुक ।
[4] Ms. अनुमानमियमेवै वा ।
[5] Ms. वस्तुत्वन्न ।
[6] Ms. वीक्षित ।
[7] Ms. यया ।
[8] Ms. निश्चित ।
[9] Ms. न्तदेव ।
[10] Ms. अपरापेक्षानैव ।
[11] Ms. अनुमान । [11a] Ms. -वह[म] ।
[12] Ms. सन्न ।
[13] Ms. किन्नानुमा ।
[15] Ms. स्मरणं संभवि ।
[15] Ms. स्मृतम् ।
[16] Ms. स्मर्यमाणोऽपि ।

विशिष्टविषयत्वेन नानुमानाप्रमाणता ।।
तच्च तस्यानुमानत्वं पक्षधर्मादिसंभवात् ।।
प्राक्प्रतीते च सादृश्ये तदन्यत्र प्रतीतितः ।
गवये तत् प्रतीतं हि गवि व्यवहृतं न किम् ।।
गवा तु नानुमेत्येतत् कस्योपालम्भ उच्यते ।
प्रतिज्ञार्थैकदेशत्वादात्मनो दूषणं परम् ।।
परेणानभ्युपगमात् परस्य तु न दूषणम् ।।
गवयस्या[1]प्यसंबन्धान्न गोलिङ्गत्वमिच्छति ।*
यदि किं तावता शक्यमुपमानं प्रमान्तरम् ।।
सादृश्यमपि सर्वेण पूर्वं दृष्टं तदन्वयि ।
अवश्यं हि क्वचिद् दृष्टे सादृश्यप्रतिपत्तिमान् ।।
एकस्मिन्नपि दृष्टेऽर्थे द्वितीयं पश्यतो वने ।
सादृश्येन सहैवास्मिन् न तदोत्पद्यते मतिः[2] ।।
अपूर्वदर्शनात् तत्र केवलं स्मरणोदयः ।
पूर्वपराव्यक्तभावात् प्राग्दृष्टेर्व्यवहारधीः[3] ।।
सदृशोऽयमितिज्ञानं[4] वासनाबलसम्भवि ।
नहि काचिदसादृश्यप्रतिपत्तिरिहेक्ष्यते[5] ।।
कस्यचित् केनचित् क्वापि सोऽवश्यं सदृशग्रहः ।
न प्रमाणान्तरं[6] दृष्टमुपमानं विपश्चिताम् ।।
सादृश्यं हि न वस्तुभ्यो व्यतिरेकेण विद्यते ।
व्यवहारेऽनुमानं[7] तु नोपमाऽत्र प्रमान्तरम् ।।छ।।
नैयायिकोपमानं तु नानुमानात् पृथक् प्रमा ।
तथाहि तेन संबन्धः साध्यते नाम तद्वतोः ।।
स चास्येदमिति ज्ञाना[8]न्नोपमानं विनास्ति किम् ।
तथासंनिहितस्तत्र गवयस्तेन तत्र कः ।।
संकेतस्यावतारोऽस्ति नामेदमिति संभवि[9] ।
अथास्त्ययमपि न्यायः संकेतस्येति वर्ण्यते ।।

---

[1] Ms. गवयश्चा ।
[2] Ms. मातिः ।
[4] Ms. मिति विज्ञानं ।
[6] Ms. प्रमाणान्तराद्दृष्टमुपमानं ।
[8] Ms. ज्ञाया ।

* अयं श्लोकः मीमांसकोपमाने एवमेवास्ति ।
[3] Ms. प्राक् दृष्टेः व्यवहारधीः ।
[5] Ms. कश्चिदसादृश्यप्रतिपत्तिरिहोत्यते ।
[7] Ms. मानन्तु ।
[9] Ms. संभवी ।

तत्रातिदेशवाचैव संबन्धस्य विनिश्चयः।
सदृशस्तस्य बुद्धिस्थो[1] यथैव प्रतिभासते।
गवये[2] तत्र संकेतः सामान्येन गतो न किम्।।
अतद्रूपपरावृत्ते[3] वस्तुमात्रे हि सर्वदा।
संकेतो गृह्यते पुम्भिर्न विशेषस्य संभवः।।
न विशेषः सदैवास्ति प्रत्यक्षप्रतिपत्तिभाक्।
तत्र संकेतकरणं व्यर्थमेवोपजायते।।
अयं स गवयार्थश्चेद्[4] विशेषेणेति गम्यते।
यदि न व्यवहारोऽस्ति संकेतग्रहणागतः।
प्रत्यक्षदृष्टेः संकेतग्रहणेनापि किं तदा।।
परं प्रति व्यवहृतौ सामान्यं स्यात्तथा सति।
सामान्येन च संबन्धग्रहणादतिदेशतः—।
अयं स गवयः पश्चाद्विशेषमवगच्छति।।
अनुमानमिदं मुख्यं सामान्यव्याप्तिपूर्वकम्।
तत्र विशेषग्रहणं[5] धूमादग्न्यनुमानवत्।।
महानसे हि संबन्धः सामान्येन प्रतीयते।
पक्षधर्मत्वतः पश्चाद्विशिष्टाग्निपरिग्रहः।।
सामान्येन हि संबन्धे विशेषेऽनुमितिः कथम्।
अन्येन योगग्रहणे कथमन्यः प्रतीयते।।
विचारितमिदं सर्वैर्वस्तुवृत्तं महारथैः।
अतद्रूपपरावृत्तं[6] वस्तुसामान्यमुच्यते।।
अन्तर्भाव्य विशेषं हि सामान्यव्याप्तिराप्यते।
अवश्यं तत्र वस्त्वस्ति किंचिदेवाविशेषितम्।।
तस्मादनुमितिन्यायः समस्त उपमास्वपि।
अङ्गदी कुण्डली यस्तु[7] स राजेति प्रतीयताम्।।
विशेषेण हि संबन्ध[8]प्रतीतौ किं प्रमान्तरम्।
शृङ्गादिसामान्यगतेस्तेनायं सदृशः पुनः।।

---

[1] Ms. बुद्धिस्था।
[2] Ms. गवयस्तत्र।
[3] Ms. सतद्रूपपरावृत्ते।
[4] Ms. गवयार्थश्चेत्।
[5] Ms. विशेष (षं) तत्र ग्रहणं। अयं पाठोऽशुद्धः—विशेषे तत्रग्रहणमिति तु कथंचिद्भवितुमर्हति विशेषं तत्र गृह्णाति इति वा।
[6] Ms. परावृत्तम्वस्तु।
[7] Mr. यो तु।
[8] Ms. संबन्धं प्रतीतौ।

श्रृङ्गादयोऽपि तैक्ष्ण्यादिभावतः सदृशात्मकाः।
तैक्ष्ण्यमन्येन केनापि पर्यन्ते वासनैव हि ।।
कारणं सदृशत्वेन व्यवहारस्य गम्यताम्।
तस्मादननुमानत्वं नोपमानस्य भाविकम् ।।
इति सर्वमिदं सुस्थमकारणमतः परम् ।।

इत्यनिन्द्यविधिना निरूपितं
नोपमानमनुमानतः परम्।
एवमन्यदपि तेन गीयते
प्रज्ञया नहि स दृश्यतेऽधिकः ।।

उपमानान्तर्भावो द्वितीयः परिच्छेदः ।।छ।।

प्रमाणषट्क-विज्ञातो यत्रार्थोऽनन्यथाभवन्।
अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ।।
ननु दृष्टः[1] श्रुतो वार्थ इति भाष्यकृतो वचः।
तत्कथं दृष्टिमात्रेण सार्थापत्तिर्निरूपिता ।।
दृष्टः पञ्चभिरित्यस्माद्भेदेनोक्ता श्रुतोद्भवा।
प्रमाणग्राहिणीत्वेन यस्मात्पूर्वविलक्षणा ।।
तत्र प्रत्यक्षतो ज्ञात्वा देहदाहेन[2] शक्तिता।
वह्नेरनुमिता[3] सूर्ये भा[4]नात्तच्छक्तियोगिता ।।
पीनो दिवा न भुङ्क्ते[5]चेत्येवमादि वचः श्रुतौ।
रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ।।
गवयोपमितायाः गोस्तज्ज्ञानग्राह्यशक्तता[6]।
अभिधानप्रसिद्ध्यर्थमर्थापत्त्यवबोधिता[7] ।।
शब्दे वाचकसामर्थ्यात् तन्नित्यत्वस्य कल्पना।
प्रमाणाभावनिर्णीतचैत्राभावविशेषितात् ।।
गेहाच्चैत्रबहिर्भाव[8]सिद्धिर्या त्विह वर्ण्यते।

---

[1] Ms. दृष्टश्रुतो।
[2] Ms. ज्ञाता देहाद्देहेन।
[3] Ms. रनुमितात्।
[4] Ms. पाना।
[5] Ms. नभुङ्क्तेत्येवमादि।
[6] Ms. गोस्तज्ज्ञानग्रह्य।
[7] Ms. मर्थाप त्रबोधिता।
[8] Ms. गेहाश्चै त्रवहिर्भाव।

तामभावोत्थितामन्यामर्थापत्ति[1]मुदाहरेत् ।
पक्षधर्माद्यनङ्गत्वाद्भिन्नैषाऽप्यनुमानतः ।।
बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।
प्रमेये यो गृहाभावः पक्षधर्मस्त्वसौ कथम् ।।
तदभावविशिष्टं हि गृहं धर्मो न कस्यचित् ।
गृहाभावविशिष्टस्तु तदासौ नैव गम्यते ।।
पूर्वं न चाविशिष्टस्य धर्मिणः स्यात् प्रमेयता ।
न चात्र बाह्यदेशो वा चैत्रो वा गम्यते पुरा ।।
जीवतस्तु गृहाभावः पक्षधर्मोऽत्र कल्प्यते[2] ।
तत्संवित्तिर्बहिर्भावे[3] नव्यबुद्धौ[4]प्रजायते ।।
अग्निसत्तानपेक्षा हि धूमसत्ता[5] प्रतीयते ।
तद्ग्रहणस्य वेलायामग्न्यधीनत्वविन्न वा ।।
गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः ।
स मृतेष्वपि दृष्टत्वाद्बहिर्वृत्ते[6]र्न साधकः ।।
विद्यमानत्वसंसृष्टगेहाभावधियानया ।
गेहादुत्का[7][लि]तश्चैत्रो विद्येत बहिरेव हि ।।
गेहाभावत्वमात्रं[8] तु यत् स्वतन्त्रं प्रतीयते ।
न तावता बहिर्भावश्चैत्रस्यैवं प्रसिध्यति ।।
स्थिते सद्भावविज्ञाने गेहाभावधियाऽत्र तु ।
गेहादुत्कालिता सत्ता बहिरेवावतिष्ठते ।।
तेनात्र निरपेक्षस्य[9] व्यभिचारो मृतादिना ।
यस्य त्वव्यभिचारित्वं न ततोऽन्यत्प्रतीयते ।।
तस्मात् प्रत्यक्षतो गेहे चैत्राभावेऽप्यभावतः ।
ज्ञाने यत् तत्त्वविज्ञानं[10] तदेवेदं बहि[:]स्थितम् ।।
पक्षधर्मात्मलाभाय बहिर्भावप्रवेशितः ।
तद्विशिष्टोऽनुमेयः स्यात् पक्षधर्मत्ववादिभिः ।।

---

[1] Ms. मदाहरेत् ।
[2] Ms. कल्पते ।
[3] Ms. बहिर्भावं ।
[4] Ms. वुद्धौपजायते ।
[5] Ms. चत्ता ।
[6] Ms. वहिवृत्तेन ।
[7] Ms. गेहादुक्त्वात ।
[8] Ms. मात्रन्तु ।
[9] Ms. नरपेक्षस्य ।
[10] Ms. विज्ञानन्तदेवेदं ।

पक्षधर्मादिविज्ञानं बहिः संबोधतो यदि ।
तैश्च तद्बोधनेत्येवमन्योन्याश्रयता च[1] तत् ।।
अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिता ।
तादूप्येणैव विज्ञानान्न दोषः प्रतिभाति नः ।।
अविनाभाविता चात्र तदैव परिकल्प्यते ।
न प्रागवगतेत्येवं सत्यप्येषा न कारणम् ।।
गृहाभाव-बहिर्भावौ न च दृष्टौ नियोगतः ।
साहित्येन प्रमाणं हि तयोरन्य[2]न्न विद्यते ।।
अन्यथानुपपत्त्यैव ह्यनेनान्यत् प्रतीयते ।
[अन्यत्प्रतीयते] तच्चेत् साहित्यं न प्रतीयते ।।
तेन संबन्धवेलायां संबन्ध्यन्यतरो ध्रुवम् ।
अर्थापत्त्यावगन्तव्यः पश्चाद्वस्त्वनुमानता[4] ।।
अत्रोच्यते परोक्षार्थादन्यथानुपपत्तितः ।
परोक्षकल्पना सैव ह्यर्थापत्तिः परोदिता ।।
अन्यथानुपपन्नत्वं तत्रासिद्धस्य नेक्षते ।
प्रमाणेन प्रसिद्धो यः स कथं नोपपत्तिमान् ।।
प्रसिद्धोऽनुपपन्नश्चेत्येतदत्यन्तदुर्घटम् ।
न दृष्टेऽनुपपन्ने[5]हि प्रसिद्धिर्भुवनत्रये ।।
यदि न स्यात् परोऽप्यत्र स्यादेवानुपपन्नता ।
नचेत् साऽप्यत्र नास्माकमत्यन्तानुपपत्तिधीः ।।
ननु चानुपपन्नत्वमेतदन्यव्यपेक्षया ।
प्रत्यक्षसिद्धं धूमादौ संबन्धग्रहणं विना ।।
तथाचेदनुमानेन किं कर्त्तव्यं परेण वः ।
अथ संबन्धबोधेन विना नानुपपत्तिधीः ।।
अर्थापत्तावपि तथेत्यर्थापत्तिर्वृथा तथा ।
कार्यहेतौ न दृष्टं चेत् संबन्धग्रहणं विना ।।
अन्यथानुपपन्नत्वमर्थापत्तौ तु दृश्यते ।।
नन्वर्थापत्तिरप्येषा कार्यादेवोपजायते ।
शक्तयः सर्वभावानां कार्यार्थापत्तिसाधनाः ।।

---

[1] Ms. य ।
[2] Ms. रन्यं न ।
[3] Ms. नातन्यप्रतीयते ।
[4] Ms. पश्चाद्वस्त्वस्त्वनुमानता ।
[5] Ms. ऽनुपपन्नं हिः ।

शक्तौ हि[च] समानायां संबन्धग्रहणं विना।
ज्ञायतेऽनुपपन्नत्वं तत्र कः प्रतिषेधकः।।
यो यथा गृह्यते भावः स तथैवोपपत्तिमान्।
अन्यथा दृश्यमानं हि शक्तः कः कर्त्तुमन्यथा।।
प्रतीतिरनुगन्तव्या पर्यन्ते सर्ववादिभिः।
प्रतीत्युत्क्रमणे वादी न वादी वादिसंसदि।।
अत्रोच्यते,—यथा दृष्टपदार्थाविगमे सति।
शक्तेरकल्पनं प्राप्तं दृश्यन्ते[च] सशक्तिकाः।।
यावन्तो यादृशा ये च यदर्थप्रतिपादने।
वर्णाः प्रज्ञातसामर्थ्यास्ते तथैवावबोधकाः।।
अन्यथानुपपत्तिश्च भवत्यर्थमितिं प्रति।
तदेवास्या निमित्तं स्यात् जायते यदनन्तरम्।।
इति यत् स्वयमेवोक्तं घटोऽयं स्फोटदूषणे।
तत्कथं स्मर्यते नैवाचिरकालव्यतीतिमत्।।
अथाप्यकल्पना स्फोटे शक्तिमात्रेण सिद्धितः।
शक्तिं विना तु तत्कार्यं कुत एव भविष्यति।।
कारणादेव तत्कार्यं वृथा शक्तेः प्रकल्पना।
शक्तिं विना कथं कार्यमशक्तेरपि भाविकम्।।
दृश्यतेऽन्यां विना शक्तिं सर्वा शक्तिं विना न किम्।।
अर्थैकप्रत्ययो दृष्टस्तदेतद्बालजल्पितम्।
न शक्तिप्रत्ययेऽप्येषा भासते [तत्] कुतः परा।।
न शक्तिरितिबोधस्य विविक्ताकारसंगतिः[1]।
अथापि व्यक्तिरस्येति व्यतिरेकोपलम्भनम्।।
कायः शिलापुत्रस्येति व्यतिरेकगतिर्न किम्।
न[2] स्वरूपावभासित्वे व्यतिरेकगतिः क्वचित्।।
अथापि मन्त्रतन्त्रादेरग्नेः किं प्रतिपद्यते।
यदि नास्ति परा शक्तिरग्निरूपे हि न क्षतिः।।
तस्मादपैति यद्यस्मिन् सति तद् व्यतिरेकि[3] तत्।
अन्यथा तस्य हानिः स्यात् कार्यं वा यत्ततो[4] न सत्।।

---

[1] Ms. सङ्गतिः।
[2] Ms. नच।
[3] Ms. व्यतिरेक।
[4] Ms. मसत्ततो।

अर्थापत्तिः प्रमाणं चे[1]दन्योन्याश्रयता भवेत् ।
कल्पनामात्रमेवैतत् प्रमाणं केन तन्मतम् ॥
ननु शक्तिं विना कार्ये कारणानां ग्रहः कथम् ।
अस्मात् कार्यं भवतु तद्व्यवहारोऽस्तु तावता ॥
कार्यार्थित्वादुपादानं[2] न शक्यार्थितया क्वचित् ।
अनेन सर्वशक्तीनां प्रत्याख्यातिरनिन्दिता ॥
तद्रूपदर्शनात् शक्तिव्यवहारः प्रसाध्यताम् ।
एवमन्योऽपि वृक्षादिर्व्यवहारस्य गोचरः ॥
स्वभावहेतुरेवं च नानुमानत्ववर्जनम् ।
कार्ये दर्शनतः शक्ति[3]व्यवहारः कु[कृ]तः पुरा ॥
इहापि कार्यं दृष्ट्वैव[4] [कार्यं दृष्ट्वैव] व्यवहार[ः] प्रसाध्यताम् ।
शब्दादर्थप्रसिद्धिश्च न संबन्धः[5] पुरा कृतः ॥
संकेताच्च प्रतीतिः सा कथं संबन्धसाधिका ।
संकेतो व्यञ्जकः शक्तेरन्वितस्य ध्वनेः सदा ॥
न संकेतसहस्रेऽपि प्रतिपत्तिरशक्तितः ।
कार्यकारणभावोऽयमेवमेवं सदा स्थितः ॥
तदा व्यञ्जनाभासत्वे[6] संकेतस्योपमा[7] कुतः ।
न च वाक्यार्थसंवित्तिस्तस्य संबन्धिता कुतः ॥
विकल्पे ननु संबन्धः कार्यकारणभावभाक् ।
तस्मान्न शब्दजा युक्त[ा] सार्थापत्तिः सदर्थिका ॥
नैवार्थापत्तिजाप्येषा नित्यसंबन्धसाधिका ।
सांकेतितोऽपि संबन्धो नित्यकार्यस्य साधकः ॥
अनित्यत्वाद्विघातश्चेदन्यथा[8] दृश्यते न किम् ।
संकेतस्य परित्यागे[9] नैवार्थ[10]प्रत्ययः क्वचित् ॥
अभावपूर्विकाप्येषा नार्थापत्ति[ः] प्रमान्तरम् ।
अभावोऽनुपलब्धि[11]त्वादनुमानात्परो न हि ॥

---

[1] Ms. चे अन्योन्या ।
[2] Ms. कार्याच्छित्वादुपाशनं न शक्यर्थि ।
[3] Ms. शक्त ।
[4] Ms. कार्यदृष्ट्वैव ।
[5] Ms. न संबन्धः शक्तिक्षेपात् पुराकृतः ।
[6] Ms. भासम ।
[7] Ms. पता ।
[8] Ms. चेत् अन्यथा ।
[9] Ms. परित्यागो ।
[10] Ms. नैवार्थः ।
[11] Ms. लब्धत्वात् ।

न चार्थापत्तिरप्येषा बहिर्भावस्य साधिका ।
अनुमानमियं यस्मादेत[1]त्पश्चाद्वदिष्यते ।।
पीनो दिवा न भुङ्क्ते वेत्येवमादि वचः श्रुतौ ।
रात्रिभोजनविज्ञानं कार्यं हेतोर्भविष्यति ।।
ननु वाक्यान्तर (परि) ज्ञाने कार्यहेतुरयं च [कः] ।
[किं] वाक्यान्तरकार्यत्वं[2] वाक्यस्य परमार्थतः ।।
पीनो दिवा न भुङ्क्ते वेत्येतद्वाक्यं श्रुतः पुरा[3] ।
रात्रिभोजनवाक्यस्य गतिरस्ति परिस्फुटा ।।
तत्त्वेव[4]मुच्यते सद्भिर्भो[5]वक्रोक्तेरियं गतिः ।
वक्रोक्तिनिपुणो योऽन्यः स एवागच्छति [ध्रुवम्]
अन्यस्य तमभिप्रायमात्मवत्[6] परिगच्छतः ।
वाक्यान्तरविवक्षायामेतद्वाक्यप्रवर्त्तनम् ।।
यथा मम त(दे)वेत्येवमनुमानमतिः स्फुटा ।
कथं हेतुसमुत्पन्नमन्यथा तत्र हीयते ।।
या त्वभावोत्थिता कैश्चिदर्थापत्तिरुदाहृता ।
पक्षधर्मादिसद्भावा[7]न्न भिन्ना साऽनुमानतः ।।
बहिर्देशविशिष्टेऽर्थे देशे वा तद्विशेषिते ।
प्रमेयो [यो] गृहाभावस्तत्र धर्मः[8] स[9] निश्चितः ।।
यदि (स) नस्यात् (स) बहिर्भावो गृहे[10]ऽभावः कथं भवेत् ।
एवमव्यभिचारित्वं गृहसंबन्धवेदनम् ।।
तेन रूपत्रयप्राप्तेरनुमानं न संशयः ।।
धर्म्यत्र देवदत्तादि कुतश्चित् कार्यतो गतिः ।
बहिर्भावस्ततः कार्यात् प्रसिद्धो देशविभ्रमात् ।।
देशसामान्यसंबन्धादेव तत्राप्रसिद्धितः ।
अनुमानप्रसिद्धोऽपि धर्मी भवति कुत्रचित् ।।
अनुमानान्तरं तत्र यतो नैव विचार्यते ।
तदभावविशिष्टं हि गृहं धर्म्यत[11] एव हि ।।

---

[1] Ms. देह । दिह इति भवितुमर्हति ।
[2] Ms. कार्यत्वम्वाक्यस्य ।
[3] Ms. परा ।
[4] Ms. तंत्रे च ।
[5] Ms. र्भावक्रोक्ते ।
[6] Ms. आत्मयत् ।
[7] Ms. भावात् न ।
[8] Ms. धर्म ।
[9] Ms. सन्निश्चितः ।
[10] Ms. गृहे भावः ।
[11] Ms. धर्मोऽत्त एव हि ।

गृहाभावविशिष्टो हि तदासौ वचसो गतः।
पूर्वं नैवागृहीतस्य धर्मिणो[1]ऽत्र प्रतीतता[2]॥
तथा हि बाह्यदेशो वा चैत्रो वा(व)गम्यते पुरा।
जीवतो हि गृहाभावः पक्षधर्मोऽत्र कल्पितः॥
तत्संवित्तिर्बहिर्भावं वाचो[3] बुद्ध्वा हि जायते।
अग्निमात्रां विना यद्वत् धूमवत्ता[4] प्रतीयते॥
न तद्ग्रहणवेलायामग्न्यधीनं[5] हि किंचन॥
गेहाभावस्तु यः शुद्धो विद्यमानत्ववर्जितः।
स मृतेष्वपि दृष्टत्वाद् बहिर्वृत्तेर्न[6] साधकः॥
विद्यमानत्वसंसृष्टगेहाभावधियाऽत्र तु।
गेहादुत्कालितश्चैत्रो[7] विद्यते बहिरेव हि॥
जीवतस्तु गृहाभावः प्रसिद्धो यदि नेष्यते।
अर्थापत्तिरपि प्राप्ता न प्रमाणं तथा सति॥
स्थिते सद्भावविज्ञाने गेहाभावधियात्र तु।
गेहादुत्कालिता सत्ता बहिरेवेत्यसद्वचः॥
स्थिते सद्भावविज्ञाने नार्थापत्तेः प्रमाणता।
जीवतो हि गृहाभावो यावत् सिध्येन्न[8] तत्त्वतः॥
न तावता बहिर्भावः शक्यः कल्पयितुं परैः।
येनात्र निरपेक्षस्य व्यभिचारो मृतादिना॥
ननु यो व्यभिचारित्वं निरूप्येच्छति साधनम्।
तस्यायं व्यभिचारोऽस्तु नानुमा[न]मनिच्छतः॥
यस्य त्वव्यभिचारित्वं साध्यादन्यन्न वाञ्छितम्॥
जीवतो हि गृहाभावो यस्य सिद्धो न वादिनः।
तस्य प्रत्य [क्ष]तो गेहे चैत्राभावेऽप्यभावतः॥
ज्ञाने यत् सत्त्वविज्ञानं तदेव न [ब]हि[ः] स्थितम्।
सत्त्वविज्ञानमेवात्र स्वस्तिमात्रान्न[9] सिध्यति॥

---

[1] Ms. धर्मणो।
[2] Ms. प्रतीयता।
[3] Ms. वा वाचो।
[4] Ms. प्रमवत्ता।
[5] Ms. वेलायामत्याधीन।
[6] Ms. दृष्टत्वात् बहिर्वृत्तेन साधकः।
[7] Ms. गेहादुत्कलिततश्चैत्रो।
[8] Ms. सिद्धेन।
[9] Ms. मात्रान।

गेहाभावाद[1]सद्भावो नाभावाद्भावसाधनम् ।
अभावं साधयन्नेव स भावं साधयेत् कथम् ।।
प्रत्यक्षं साधयेद्भावं यथा भावं न साधयेत् ।
प्रत्यक्षमनुमानं च न भावे साधनं यथा ।।
विपर्ययस्य नैवात्र साधनत्वं विपर्यये ।
अभावेऽननुमानेन तत्सत्त्वैव समाश्रिता[2] ।।
अभावो भाव एवेति बहिर्भावो भवेद् यदि ।
अर्थापत्तेर्न सर्वत्रेत्येव[3]मन्योन्यसंश्रयः ।।
यावन्नाभावसंकोचस्तावदेषा न व[र्त्तते] ।
[यावदेषानव]र्त्तेताऽभावसंकोचिका कुतः ।। ?
एतयैव भवेत्स[ा] चेत् संदेहो[ऽपि] भवेत्क्वचित् ।
तस्माज्जीवित्व[4]संसिद्धेरर्थापत्ति[ः] प्रसिध्यति ।
अर्थापत्तिप्रसिद्धौ[5] वा जीविता[6]ऽन्योन्यसंश्रयः ।।
पक्षधर्मात्मलाभाय बहिर्भाव[ः] प्रवेशितः ।
तद्विशिष्टोऽनुमेयः स्यात् पक्षधर्मान्वियोदितः ।।
पक्षधर्मादिविज्ञानं बहिःसंबोधतो यदि ।
तैश्च तद्बोधनेत्येवमन्योन्याश्रयता भवेत् ।।
अन्यथानुपपत्तौ तु प्रमेयानुप्रवेशिता ।
ताद्रूप्येणैव विज्ञानान्न दोष[ः] प्रतिभाति नः ।।
उक्तमत्र यथात्रापि सोऽन्योन्याश्रयसंभवः ।
प्रमेयानुप्रवेशस्तु[7] न सिद्धः साधकः कथम् ।।
ताद्रूप्येणैव विज्ञानं किं तद्वचनमात्रकात् ।।
निर्विवेकस्याकल्पापि यदि नाम न[8] भासते[9] ।
दोषः किं तावता नास्ति तथाचेन्नाजितं जडैः ।।
[स]मद्यमाननं[10]यस्य दौर्गन्ध्यं प्रतिभासते ।
यदि किं तावता तत्र दौर्गन्ध्यस्य न संभवः ।।

---

[1] Ms. भावामसद्भावो ।
[2] Ms. सिसाश्रिता ।
[3] Ms. सर्वत्रेत्येन ।
[4] Ms. ज्जीवत्व ।
[5] Ms. प्रसिद्धे ।
[6] Ms. जीवंते ।
[7] Ms. प्रमेयार्थानु प्रवेशस्तु ।
[8] Ms. 8 म ।
[9] Ms. भाषते ।
[10] Ms. मघमानं नमन्य

अविनाभाविता[1] चात्र तदैव यदि कल्प्यते।
न प्रागवगतेत्येवं[2] सत्यप्येषा न कारणम्॥
अविनाभावितैवात्र प्रागेव परिनिश्चिता।
तदैवावगता[3] नेयमिति केन न कारणम्॥
पूर्वदेशानवस्थान[4]मन्यदेशस्थितिं विना।
न दृष्टमेकसामग्र्या............॥
दृष्टौ (हि) समाजकालस्थौ नामग्रामौ[5] तुलात्तयोः। (?)
गृहाभावबहिर्भावौ न [6]सापेक्षौ नियोगतः॥
अन्या स्थाने प्रतीतिस्तु नियमेनैव जायते।
प्रतीत्या सति[7] साहित्ये प्रमाणं किं[8] न विद्यते॥
अन्यथानुपपत्त्यैव नैकेनान्यः[9] प्रतीयते।
प्रत्यक्षानुमयोरेव[10] प्रामाण्यमिह विद्यते॥
तथा न कल्प्यते[त]च्चेत् साहित्यं किं[11] न सिध्यति।
न च संबन्धवेलायां संबन्ध्यन्यतरो[12] ध्रुवम्॥
अर्थापत्त्यावगन्तव्यः पश्चादस्त्यनुमानता॥

योऽत्यन्तमन्त्रजडधीर्न विवेकभाजि,
तत्त्वे प्रवर्त्तनमुपैति न मे कथंचित्।
अन्यस्य तस्य न ज[न]ानुमतेर्विशेष-
स्तस्य स्खलद्गति(:) निवर्त्तनमेतदस्तु॥

प्रमाणान्तर्गतौ तृतीयोऽर्थापत्तिपरिच्छेदः॥छ॥

प्रमाणान्तरभावोऽपि "भाष्यकृ"त्प्रतिपादितः।
अभावेऽपि[13] प्रमाभावो नास्तीत्येतद्विनिश्चये॥
अर्थस्यासंनिकृष्टस्य[14] तथाचाह "कुमारिलः"।
भाष्यकारोक्तमेवार्थमुपपत्त्योपदर्शयन्॥

---

1 Ms. भाविना।
2 Ms. प्रागेवतेत्येवं।
3 Ms. तदैवऽपगता।
4 Ms. स्थानं अन्यदेश।
5 Ms. नामी ग्रामौ।
6 Ms. नापेक्षौ।
7 Ms. सत।
8 Ms. किन्न।
9 Ms. नैकोनान्य।
10 Ms. प्रत्यक्षानुमानयोरेव।
11 Ms. किन्न।
12 Ms. सन्ध्यतरो ध्रुवम्।
13 Ms. अभावोऽपि।
14 Ms. सन्निकृष्स्यट।

प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते।
वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता[1]।।
वस्तुसंकरसिद्धिश्च तत्प्रामाण्यसमाश्रिता [समाश्रया]।
क्षीरे दध्यादि यन्नास्ति प्रागभाव[:] स उच्यते।।
नास्तिता पयसो दध्नि प्रध्वंसाभावलक्षणम्।
गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते।।
शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः।
शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते।।
क्षीरे दधि भवेदेव दध्नि'क्षीरं' घटे पटः[2]।
शशे शृङ्गं[3] पृथिव्यादौ चैतन्यं मूर्त्तिरात्मनि।।
अप्सु गन्धो रसश्चाग्नौ वायौ रूपं च तैः[4] सह।
व्योम्नि संस्पर्शता वेति न चेदस्य प्रमाणता।।
न च स्याद्व्यवहारोऽयं कारणादिविभागतः।।
प्रागभावादिभेदेन नाभावो वि[भि]द्यते यदि।
न वा वस्तुन एभिः स्युर्भेदास्तेनास्य वस्तुता[6]।।
कार्यादीनामभावः कार्यो भाव[:] कारणादितः[5]।
यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यदस्त्ययम्[7]।।
तस्माद् घटादिवद्वस्तु प्रमेयत्वाच्च गृह्यताम्।।
न चौप[8]चारिकं वात्र भ्रान्तिर्वा[पि] यदृच्छया।
भवत्यतो न सामान्यविशेषात्मकता वृथा।।
प्रत्यक्षादेरनुत्पत्ति[:] प्रमाणाभाव उच्यते।
आत्मनो परिणामो वा विज्ञानं स्वान्यवस्तुनि।
[स्वरुपपररूपाभ्यां[9]] नित्यं सदसदात्मके।।
वस्तु विज्ञायते [वस्तुनि ज्ञायते] कैश्चिद् रूपं किंचित् कदाचन।।
यस्य यत्र यदोद्भूतिर्जिघृक्षा वापि जायते।
विद्यतेऽनुभवस्तस्य तेन च व्यपदिश्यते।।

---

[1] Ms. तत्र भाव प्रमाणात्।
[2] Ms. घटोपटः।
[3] Ms. शशश्रृङ्गं।
[4] Ms. वैः। "वायौ रूपेण तौ सह" इति श्लोकवार्त्तिकपाठः।
[5] Ms. कारणादिनः कारणादिना इति च श्लोकवार्त्तिके पाठः।
[6] Ms. न चावस्तुन एतेस्युरिति श्लोकवार्त्तिकपाठः।
[7] Ms. यदस्त्वयम्।
[8] Ms. कारिकं।
[9] Ms. ...स्वरूपाभ्यां।

तस्योपकारकत्वेन वर्त्तते[1] यस्तदेतरः।
उभयोरपि संवित्त्वाद्[2] उभयावगमोऽस्त्विति।।
प्रत्यक्षव्यवहारस्तु [प्रत्यक्षाद्यवतारस्तु] भावांशो गृह्यते यदा।
व्यापारस्तदनुत्पत्तिरभावांशे जिघृक्षिते[3]।।
न तावदिन्द्रियेणैषा नास्तीत्युत्पाद्यते मतिः।
भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि।।
ननु भावादभिन्नत्वात् संयोगो ना[ह्य]स्ति तेन च।
न ह्यत्यन्तमभेदोऽस्ति[4] रूपादिवदिहापि नः।।
धर्माणां भेद इष्टो हि धर्म्यभेदे[5]ऽपि नः स्थिते[6]।
उद्भवाभिभवात्मत्वाद् ग्रहणं वाऽवतिष्ठते।
तत्संबन्धे सदित्येवं सद्रूपत्वं प्रतीयते।।
नास्त्यत्रेद[7]मितीत्थं तु [तत्] तत्संयोगहेतुकम्।
गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं जायतेऽक्षा[8]नपेक्षया।।
मानं कथमभावश्चेत् प्रमेयं चात्र कीदृशम्।
[तत्र] यो यदभावः[9]स्यान्मानमप्येवमिष्यताम्।।
भावात्मके यथा माने नाभावस्य प्रमाणता।
भावात्मकस्य मानत्वं नच राजाज्ञया स्थितम्।।
परिच्छेदफलत्वेन[10] प्रामाण्यं स्याद् द्वयोरपि।।
यदि चास्य प्रमाणत्वमभावत्वेन नेष्यते।
वस्तुनः कारणत्वं हि दृष्ट[11]मित्यभिमानतः।
नैव लिङ्गप्रमेयत्वे भवेतां[12] तद्वदेव हि।।
तथा सति समस्तोऽपि व्यवहारो न सिध्यति।
प्रमाणानामनुत्पत्तेर्न चाभावस्य धर्मता[13]।।

---

[1] Ms. वर्त्तन्तेद्वस्तदेतरः। "वर्ततेंशस्तदेतरः" इति श्लोकवार्त्तिके पाठः।
[2] Ms. संवित्तात्।
[3] Ms. रभुत्पत्तेरभायांशो जिघृक्षते।
[4] Ms. नह्यन्तत भेदोऽस्ति।
[5] Ms. धर्मभेदेऽपि।
[6] Ms. स्थितेः।
[7] Ms. नास्त्यत्वेद।
[8] Ms. अक्षा।
[9] Ms. योयद्भावः।
[10] Ms. पलत्वेन बलत्वेना।
[11] Ms. दृष्टि।
[12] Ms. भवेतान्तद्व।
[13] Ms. धर्मत्व।

यत्राभावोऽस्ति तेनास्याः[1] संवन्धो नैव सिध्यति।
न[चा] संनिहित[2]स्तत्र तस्य धर्मो भवेदयम्॥
न च तस्य प्रमेयत्वं धर्मधर्मित्ववर्जनात्।
अभावे[3] नतु संबन्धो भवेत्तद्विषयत्वतः॥
यज्ज्ञानाविषयत्वं च ज्ञाने मेयं न[4] विद्यते।
संयोगसम[5]वायादिसंबन्धो नैव विद्यते॥
नागृहीते च धर्मत्वं गृहीते सिद्धसाधनम्।
अभावशब्दवाच्यत्वात् प्रत्यक्षादेव भिद्यते॥
[न] प्रमाणमभावो हि प्रमेयाणामभावतः।
भावोऽपि हि प्रमाणेन स्वानुरूपेण मीयते॥
[अभावस्य प्रमाणत्वं न] प्रमेयाद्यभावतः[6]।
अभावोऽपि प्रमाणेन स्वानुरूपेण मीयते॥
प्रमेयत्वाद्ध्यभावस्तु[7] तस्माद् भावात्मकात् पृथक्[8]॥ इति॥छ॥
अत्रोच्यते यथाऽभावो[9] न प्रमाणान्तरं मतम्।
न हि स्वरूपं तस्यास्ति परतोऽनुपलब्धितः॥
एकोपलम्भानुभवादिदं[10] "नोपलभे" इति।
बुद्धेरुपलभे वेति कल्पिकायाः समुद्भवः॥
उपलम्भनिषेधश्चेदेवमु[11]परिनिश्चितः।
तस्मादनुपलम्भात्तु प्रमेयोऽ[12]भावनिश्चयः॥
अत्रोच्यते, विविक्तस्य वेदनाद्धि स निश्चयः।
तदन्यथावेति मतं यतः पक्षान्तरं न हि॥
विविक्तस्यो[13]पलम्भाच्चेज्[14]ज्ञानभाव[स्य] निश्चयः।
विविक्तस्योपलम्भश्चेत् परतः सिद्धसाधनम्॥

---

[1] Ms. यत्र भावोऽस्ति तेनास्य। [2] Ms. [च] सन्निहित।
[3] Ms. अभावेन तु। [4] Ms. ज्ञान मेयेन।
[5] Ms. समता यादि° संवधौ (धे)?
[6] Ms. नाभावस्य प्रमाणत्वं तत्प्रमेयाद्यभावतः—इत्यपि पाठः सम्भवति।
[7] Ms. भावस्तस्माद्भा°। [8] Ms. पृथगिति।
[9] Ms. यथा भावो। [10] Ms. एकोपलम्भानुभावा।
[11] Ms. सुपरि.। [12] Ms. प्रमेयो भावनिश्चयः।
[13] Ms. विविक्तास्यो°। [14] Ms. च्चेत ज्ञानभावस्य।

स्वविविक्तोपलम्भात्तु नाभावस्य विनिश्चयः।
नोपलम्भस्य संदेहे तदभावविनिश्चयः॥
उपलम्भस्य भावश्चेत् सतस्तस्य निषिद्धता[1]।
न ह्यन्यान्योपलभ्येषु[2] नास्तितानुपलम्भतः[3]॥
न च सोऽनुपलम्भोऽपि प्रतिषेधान्यवस्तुनः।
अभावे तु प्रमाणस्य प्रमेयं नेति तत्कुतः॥
प्रमाणाभावोऽन्यथा नो चेदर्थापत्तिरियं सदा।
न चार्थापत्तिरत्रास्ति नादृष्टं सर्वदैव न॥
प्रमाभावे तु साध्ये स्यादभावः कोऽपरः प्रमा॥
गृहीत्वा मानसं[4] भावं स्मृत्वा च प्रतियोगिनम्।
मानसं नास्तिताज्ञानं भवेत्पूर्वग्रहे सति॥
न चाभावः पुरा दृष्टो भावादेव हि मीयते।
घटमानं पुरा दृष्टमिति चेत् तेन नास्ति तत्॥
प्रामाण्या[5]भावसिद्धिश्चेत् प्रमेयाभावतः[6], कथम्?।
प्रमाणाभावतश्चे[त्त] दर्थापत्तिर्भवेदियम्॥
नियमश्च न तत्रास्ति पूर्वमेवोपपादितम्।
एतदेव द्वयाभाव इति [तत्] साध्य साधनम्॥
अन्योन्यतश्चेन्न भेदस्तथा सति भवेद् द्वयोः।
सहोपलम्भनियमादभेद उपपादितः॥
सहोपलम्भनियमादभेदोमानमेययोः॥
सहोपलम्भनियमादेतयोस्तदभावयोः[7]।
अन्योपलम्भतो[8] वापि किमभावः प्रसिध्यति॥
तद्वि[वि]क्तोपलम्भाच्चे[9]दर्थेनापि विविक्तता।
प्रमाणभावसंसिद्धिः किमिदानीमनर्थिका॥
अथ प्रमेयाभावेऽपि केवलग्रहणं भवेत्।
प्रमाणान्तरभावे तु न केवलविदन्वयः॥

---

[1] Ms. निषिद्धिहि।
[2] Ms. नह्यन्यान्युपलभ्येषु।
[3] Ms. नास्ति नानुपलम्भतः।
[4] Ms. मानसम्भावं।
[5] Ms. प्रामाण्यभावः।
[6] Ms. प्रमेयाभावनितः।
[7] Ms. नियमादेतास्तदभावयोः।
[8] Ms. अन्योपलम्भावपि किमभावः प्रसिध्यति।
[9] Ms. चेत् अर्थेनापि।

एवं प्रमाणाभावेऽपि मेयाभावो न सिद्धति ।
उपलब्धिलक्षणा[1]त्तत् समानमुभयोरपि ।।
तस्माद्विविक्ततामात्रमभावव्यपदेशभाक् ।
विधिकेन तु निर्द्देशः शीलापुत्रशरीरवत् ।।
तस्मादनादिसंसारव्यवहारप्रतीतितः ।
तद्विकल्पोदया[देव] भावव्यवहृतिः परा ।।
नार्थभाव[:] प्रमाभावादपरः कश्चिदीक्ष्यते ।
तदन्यभाव एवात्र प्रमाभाव[:] प्रमान्वितः ।।
अभावबुद्धिग्राह्यो यः सोऽभाव इति नैव सत् ।
अभावबुद्धि[:] किं काचिद्[2] रूपादि व्यतिरेकवित् ।।
यस्याभावो[ऽ]परोऽसिद्धस्तस्य तद्वन्न सिध्यति ।
प्रमेयप्रतिभासेन स्फुटं बुद्धिः प्रसाध्यते ।।
अन्यथा सर्व एव स्या[3]दनायासेन वेदकः ।
तथासति पदार्थानां निर्णयः सुखसाधनः ।।
कुटकटेत्युच्यते सोऽयं कुटबुद्धौ चकास्ति नः ।
एवं घटादिभेदोऽपि परस्परविवेकतः ।।
न चकास्त्येव तद्भेदात् समानमुभयोरपि ।
अभावव्यवहारोऽयमिति चेदस्ति संगतः[4] ।।
व्यवहारमात्र[5]मेतत् तदन्यस्योपलम्भने ।
अभावेन विनान्यत्वमथ चेन्न प्रसिध्यति ।।
स्वकारणादसिद्धं चेत् तदभावात् कथं तथा ।
स्वकारणादेवसिद्धमभावात्तत्प्रतीयते ।।
स्वभावग्राहिणो[6] व्यक्तादसिद्धार्थात्कुतोऽन्यजः ।
अथ स्वरूपं भावान्न भिन्नं [त]त्राप्यभेदवत् ।।
भेदाभेदावधियोगाद्[7] भेदाभेदवदिष्यते ।
भिन्ना इति परोपाधिरभिन्ना इति वा पुनः ।।

---

[1] Ms. लक्षणादेतत् ।
[2] Ms. काचित् रूपादि ।
[3] Ms. स्यात् अनायासेन ।
[4] Ms. दङ्गतः ।
[5] Ms. व्यवहारमात्रमेवैतत् ।
[6] Ms. ग्राहिण्यो॰ ।
[7] Ms. भेदाभेदादोयधियोगात् ।

भावात्मा वा प्रपञ्चोऽयं संसृष्टेष्वेव लक्ष्यते।
अभावस्य स्वरूपेण यदि तावद्ग्रहः स्वतः॥
स्वरूपेण प्रतीतस्य भेदकत्वं कथं मतम्?।
भेदकत्वात् प्रतीतिश्चेत् पृथग्भावोऽप्य[थो] भवेत्॥
स्वरूपेण प्रतीतस्य भेदकत्वं किमुच्यते[1]।
तदपेक्षो (ऽस्य) भेदकश्चेत् परभावो न किं तथा॥
स्वरूपसमतायां चेद[2]भावो न [च] भेदकः।
न हि तस्यापि रूपेण प्रतीतेर्भेदकस्थितिः॥
स्वरूपेण प्रतीतोऽपि भेदको नीलपीतवत्।
न नीलपीतरूपेण स्वरूपादतिरिच्यते॥
भेदकं [च] स्वरूपेण नेदं कर्त्तृत्वसंगमात्।
अथ स्वरूपं तत्तस्य[3] कारणादेव जायते॥
सर्वत्र कारणादेव भेदाभावः परो वृथा।
कारणादेव भवतीत्येतदप्यतिदुर्घटम्॥
स्वकारणात् स्वयं जातः कथमन्यस्य भेदकः।
दृश्यते भेदकत्वं चेत्? दृश्यते दृश्यते यदि॥?
पदार्था(द) दर्शनादन्योऽन्योऽ[4]त्रार्थ उपपद्यते।
स प्रसज्यनिषेधो वा प[5]र्युदासोऽथवा भवेत्॥
प्रसज्यप्रतिषेधे हि स एवार्थो न विद्यते।
पर्युदासे हि सदृश[6]स्तदन्योऽर्थः प्रतीयताम्॥
ततोऽस्त्यभावो न परः प्रमाणप्रतिपत्तिभाक्।
अथाभावप्रतीतेर्यो विषयः स तथोच्यते॥
सैवाभावप्रतीतिर्हि प्रसज्यादिविधा भवेत्।
प्रमाणपञ्चकाभावः पर्युदासो न युच्यते॥
न जायत इति प्रोक्तं नेदृशी पर्युदासता।
पर्युदासेऽपि प्राप्तं [यत्] तदेवानुपलम्भनम्॥
प्रमाणपञ्चकाभावात् पररूपेण नेयता(ते?)।
तद्वस्तु तत एवास्या[ः]संकरः[7] पर्युदासतः॥

---

[1] Ms. मिमुच्यते।
[2] Ms. चेत् अभावो।
[3] Ms. त्ततस्य।
[4] Ms. दन्योन्याऽत्रार्थ।
[5] Ms. पुर्युदासो॰।
[6] Ms. सदृशः तदन्योऽर्थः।
[7] Ms. ॰सङ्करः।

परभावो भवेदत्र यदि तद्रूपता भवेत् ।
अभावादेव तत्प्राप्ता वस्त्वसंकर[1]संस्थितिः ।।
प्रसज्यप्रतिषेधे[2]ऽपि वस्त्वसंकरता न किम् ।
स एवाभाव इति चेत् पर्युदासः परो यतः (परोऽन्यतः ? )
पर्युदासोऽपि नैवायं[3] पराभावं विना[4] कृतः ।
तस्यापि पर्युदासत्वे पराभावनिराकृतिः ।।
तत्रापीत्यनवस्थेयं कथं[5] नाम निवार्यताम् ।
प्रमाणस्यासमाप्तौ च प्रमेयस्यासमाप्तितः ।।
क्षीरे दध्यादि नास्तीति दध्यसंसृज्य[6] पाच्यते ।
असंसृष्टं[7] हि तद्रूपं प्रत्यक्षादेव सिद्धिभाक् ।।
यदि नाध्य[8]क्षतः सिद्धिरभावादपि नो भवेत् ।।
यथा स्वरूपं तत्तस्य तदभावनिराकृतम् ।
तथा स्वरूपं तत्तस्य भावान्तरविनाकृतम् ।।
अभावग्रहणे तस्य निषेधो न प्रतीतिभाक् ।
भावान्तरस्याग्रहणे विविक्तत्वं प्रसिध्यति ।।
अयमेवेति यो ह्येष भावे भवति (भवेन) निश्चयः ।
नैष वस्त्वन्तराभाव[:] संसिध्यत्यनुमामृते[9] ।।
वस्त्वन्तरत्वसिद्धौ (हि) तदभावावगतिर्भवेत् ।
अवधारणसिद्धौ च वस्त्वन्तरतया गतिः ।।
एवमन्यतरासिद्धौ[10] नैकस्यापि प्रसिद्धता ।
साधारणत[11]यार्थःस्याद् यदि नाध्यक्षगोचरः[12] ।।
अध्यक्षा[13]दन्वयगतौ नाभावोऽपि प्रतीतिभाक् ।
नहि तत्रैव तस्यैवाऽभावः[14] सिध्यति तत्त्वभाक् ।।
अवधारणमध्यक्षा[15]दित्यद्वयनिराक्रिया ।।

---

1 Ms. सङ्कर ।
2 Ms. ०प्रतिषेधोऽपि ।
3 Ms. नै वायं ।
4 Ms. विवा ।
5 Ms. कथन्नाम ।
6 Ms. दध्यसंसृष्टज्य. ।
7 Ms. असृष्टं ।
8 Ms. नाव्यक्षतः ।
9 Ms. संवृसम्वत्यनुमादृते ।
10 Ms. वृद्धौ ।
11 Ms. साधारणतार्थस्य यदिनाव्यक्ष ।
12 Ms. नाव्यक्ष० ।
13 Ms. अव्यक्षा० ।
14 Ms. तस्यैवा अभावः ।
15 Ms. मव्यक्षा ।

गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् ।
मानसं नास्तिताज्ञानं जायतेऽ[1]क्षानपेक्षया ।।
गृहीत्वा वस्तुसद्भावं यदि व्यावृत्तिसंगतम् ।
[तदा तत्साध्वन्यथा नो] व्यावृत्तिग्रहणं विना ।
वस्त्वसंकरसिद्धिर्या तत्प्रामाण्यसमाश्रिता[2] ।।
प्रतियोगिस्मृतिः सर्वा प्रतियोगिग्रहात्[3] सदा ।
प्रतियोगिग्रहोऽप्येष नाभावग्रहणाद्विना ।।
ततश्च चक्रक[4]प्राप्ते नैकमप्यत्र सिध्यति ।।
अथाव्याकृतएवार्थो व्यावृत्तत्वेन मीयते ।
[तर्हि] तथाचायमिति दत्त एव जलाञ्जलिः ।।
अथापि स्यान्निषेधो यः प्रसज्यप्रतिषेधतः ।
स एवाभाव इष्टोऽत्र स चाभाव[:] प्रमा ततः ।।
प्रसज्य[5]प्रतिषेधोऽयं, निवृत्तिः कस्य भण्यते ? ।
निवृत्तिस्तस्य, तस्मिंश्चाप्रतीते गम्यते कथम् ? ।।
प्रतीतेस्तन्निवृत्तिश्चेद्[6] (अनिवृत्तिश्चेत्) अनिवृत्तिश्च कीदृशी ।
अथापि या स्वतो दृष्टा [7]तदन्यत्र निषिध्यते ।।
तद्द्वयोरपि[8] दृश्यत्वे निषेधार्थः क उच्यते ।
व्यावृत्तेऽव्याकृतो दृष्टो निषेधः कीदृशोऽपरः ।
अव्यावृत्ते[9] तु न [10]दृष्टो निषेधः कस्य कुत्र वा ।।
निषेधस्य विधानं चेत् स भेदात्सर्वनष्टता ।
निषेधस्य विधानं चे(द)दृष्टस्योपपत्तिमत् ।।
अन्तरालनियोगश्चे[11]दन्तरालं[12] कथं भवेत् ।
आकाशमन्तरालं तदतो भेदो न सिध्यति ।।
प्रागभावादिभेदेन संभवी कथमुच्यते ।
न शुद्धाकाशदेशस्य सर्वाभावसमानता ।।

---

[1] Ms. ऽज्ञानपेक्षया ।
[2] Ms. समाश्रृता ।
[3] Ms. ग्रहण सदा ।
[4] Ms. ततश्चक्रक ।
[5] Ms. प्रसज्य प्रतिषेधोऽयं ।
[6] Ms. श्चेत् ।
[7] Ms. 2स्तदन्यत्र ।
[8] Ms. तद्वयोरपि हि दृश्यत्वे ।
[9] Ms. अव्यावृत्तेषु ।
[10] Ms. नदृंष्टो ।
[11] Ms. अन्तरात्मनयोगश्चेत् ।
[12] Ms. अनरालं ।

दध्यादिभेदाद्भेदश्चेत् तदसिद्धौ न सिध्यति ।
प्रागभावाप्रसिद्धौ च दध्युत्पत्तिः कथं भवेत् ? ।।
उत्पत्तिः[1] सिध्यते सा चेत्तदा, नास्ति तदा कथम् ? ।
नास्तिता पयसो दध्नि क्षीरात् सिद्धौ न सिध्यति ।।
प्राक् तस्य सिद्धिर्भूतेति तदाभावो न सिध्यति ।
अध्यारोपादभावश्चे[2]द्वस्तुभावो न सिध्यति ।।
तदाकारातिरेकेण न चाभावोऽस्ति भाविके ।
तस्याभावो बहिः स्याच्चेद्बहिः संवेदनं कुतः ? ।।
दध्नि [3]तस्येष्यते भावः केनादः संप्रतीयताम् ? ।
अभावेनेति चेत्तत्र [त] देवेदं विचार्यते ।।
प्रत्यक्षेण मया दृष्टो भाव इति न विद्यते ।
अभावेऽपि प्रतीतिश्चेत् पर्युदासे समाप्यताम् ।।
नचावस्तुन एते स्युर्भेदादित्यपि सांप्रतम् ।
वस्तुत्वं पर्युदासेन तद[4]स्माभिर्न चेष्यते ।।
अथवा——पारमार्थिकभेदत्वं न सिद्धं नः प्रमाणवत् ।
अपारमार्थिको[5] भेदो न वस्तुत्वस्य साधकः ।।
यद्वानुवृत्ति[6] व्यावृत्तिबुद्धिग्राह्य इतीरितम् ।
न घटादिवदेवास्मा[7]द्वस्तुत्वस्य प्रसाध्यता[8] ।।
सांख्यनैयायिकादीनां परस्परविरोधतः[9] ।
भावास्तथा प्रतीयन्ते किं तेषामपि वस्तुता ।।
तत्रौपचारिकत्वं वा भ्रान्तिर्वापि[10] यदृच्छया ।
न भवत्येव पूर्वोक्ते न भवेद् यदि - - - ।।
प्रत्यक्षादेरनुत्पत्ति[र्न] प्रमाणान्तरात्परा ।
प्रत्यक्षान्तरतो वापि ततोऽस्यानुपलब्धिता ।।
स्वरूपपररूपाभ्यां वस्तुनः स्यात् परात्मकम् ।
स्वरूपेण हि सद्रूपं ततोऽन्या वा सदात्मता ।।

---

[1] Ms. उत्पत्ते ।
[2] Ms. श्चेत् वस्तु ।
[3] Ms. दस्येष्यते ।
[4] Ms. तस्मास्माभि ।
[5] Ms. अपारमार्थिकभेदो ।
[6] Ms. व्यावृत्त ।
[7] Ms. वास्मात् वस्तु त्वस्य ।
[8] Ms. वस्तु त्वस्य प्रसाध्यताम् ।
[9] Ms. विरोधिनो ।
[10] Ms. ०चारिकत्वंभ्रान्तिपूर्वापि यदृच्छचा

ततः स्वरूपमेवास्य परव्यावृत्तिमीक्षते ।
यदि स्वरूपाद्व्यावृत्तमसदात्मकता वृथा ।।
अथाव्यावृत्तमेवेदमसदात्मकता कुतः ? ।
यदि तस्योपयोगित्वं[1] सर्वदा तत् प्रतीयताम् ।।
एकत्वे (न) वस्तुनस्तस्योद्भूतानुद्भूतते[2] कुतः ? ।
नानात्वे वस्तुनस्तस्य कस्मात्तदुभयात्मता[3] ।।
जिघृक्षा यदि नाम (:) स्या[4]च्चक्षुः कात्स्न्र्यें हि[5]तां विना ।
न केवलस्य ग्रहणे केनचिद् दृश्यते स्फुटम् ।।
तस्योपकारकत्वेन वर्त्तते यस्तदेतरः ।
उभयोरपि संवित्त्वा[6]दुभयानु[7]गमः कथम् ।।
उभाभ्यामपि संवित्तिर्न भवेदुभ[8]भावना ।
प्रत्यक्षाद्यवतारस्तु भावांशो[9] गृह्यते यदा ।
व्यापारस्तस्य भावांशो न भेदेन कथं भवेत् ।।
तद्योगादिन्द्रियेणैव नास्तीत्युत्पाद्यते मतिः ।
भावांशपर्युदासेऽपि ना[10]न्यत्राभाव उच्यते ।।
तदन्यत्वं कथं तस्य तद्विलक्षणभावतः ।
तद्वै[11]लक्षण्यमस्यापि देश[12]कालादिभावतः ।।
देशभेदादिना भेदो यद्यभावो वृथा भवेत् ।
देशादेरप्यभावेन विना भेदः कथं ततः ।।
अभावस्यापि भिन्नत्वे सैव स्यादनवस्थितिः ।
*अभावो यदि सर्वात्मना भेद एव प्रसज्यते ।।
तद्रूपानुप्रवेशेन विना नैव परिस्फुटः ।
अनुप्रवेशो भावे हि भेदादन्या गतिः कुतः ।।
कथञ्चित्तस्य भावस्यानुप्रवेशो गतो यदि ।
अनुप्रवेशे[13] तद्रूपे प्रलये च न भेदि[ता] ।।

---

[1] Ms. योगात्पकत्हं ।
[2] Ms. ०स्तस्योद्भूतानुताभूते ।
[3] Ms. कस्मात्तस्योभयात्मता ।
[4] Ms. स्यात् चक्षुः० ।
[5] Ms. सितां ।
[6] Ms. संवित्ता० ।
[7] Ms. ०दुभयोरनुगमः
[8] Ms. ०भवेदुभपभावना ।
[9] Ms. भावांशो ।
[10] Ms. न तदन्यत्राभाव ।
[11] Ms. तद्वयै० ।
[12] Ms. दशकालादि० ।
* छन्दोभङ्गदोषः ।
[13] Ms.13 अनुवेशे० ।

स्वेन रूपेण देशश्चेत् प्रवेशः स कथं मतः।
पररूपेण देशश्चेन्न[1] तदान्येन वेशिता [वेदिता]।।
पररूपे(ण) सति कथं स्वभावो ननु भिद्यते।
सोऽप्येकान्तं[2] न भिन्नश्चेत् तदेवावर्त्तते पुनः।।
धर्मयोर्भेद इष्टश्चेद्[3] धर्मभेदे[4] व्यवस्थिते।
धर्मधर्मिव्यवस्थेयं भेदेऽ[5]सति कथं भवेत्।।
समवायव्यवस्थायां पदार्थान्तरमेव हि।।
गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिन(स्) [म्]।
मानसं नास्तिताज्ञानं जायतेऽक्षा[6]नपेक्षया।।
अन्योन्यसंश्रयः प्रोक्तो जायतेऽ[7]क्षानपेक्ष[या]।
इत्यनिष्टमतो व्यक्तफलमेतदवस्थितम्।।
वस्तुनः कारणत्वं हि नास्तीत्यत्र[वि] निश्चये।
न लिङ्गत्वविनिर्मुक्तस्वभावात् कारण[8]स्थितिः।।
केवलं प्रतिभासे हि तदभावे (अन्य) तदापि वित्।
एतावन्मा[त्र] निष्ठोऽयमभावस्य विनिश्चयः।।
तथैव हि समस्तोऽयं व्यवहारः प्रसिद्धिभाक्।
प्रमाणानामनुत्पत्तेस्तथा भावाभावधर्मता।। ?
केवलस्य प्रदेशस्य ग्रहणं साध्यसाधने।
अभावोऽनुपलब्धिश्च केवलं प्रतिभासते।।
अत्राभावेऽस्ति तेनास्याः संबन्धे धर्मधर्मिता।
यो न [9]संनिहितस्तत्र तस्य धर्मस्य नेष्यते।।
नैव तस्य प्रमेयत्वं तदभावस्य साधनात्।
अभावेन हि सम्बन्धस्तस्य तादात्म्यलक्षणः।।
अतस्तत्र[तु] तादात्म्याद्[10] व्यवहारस्य साध्यता।
संयोग[11]समवायादिसंबन्धः केन नेष्यते।।

---

[1] Ms. देशश्चेत् न।
[2] Ms. प्येकान्तन्न०।
[3] Ms. इष्टश्चेत्।
[4] Ms. धर्मभेदो।
[5] Ms. भेदे सति।
[6] Ms. ऽपेक्षानपेक्षया।
[7] Ms. ऽज्ञा।
[8] Ms. कारणं।
[9] Ms. सन्निहित।
[10] Ms. दातात्म्यात्।
[11] Ms. संयोगः।

नागृहीतेऽस्ति धर्मत्वं गृहीतेऽ[1]थाप्यनर्थकम् ।
[2]अभावशब्दवाच्यत्वात् प्र[3]त्यक्षाद्भिद्यते कथम् ।।
प्रमाण[ा] नामभावोहि प्रमाणेनासहस्थितेः ।
अभावो हि प्रमाणेन स्वानुरूपेण विद्यते ।।
प्रमेयत्वादभावो [हि] न[4] स्याद् भावात्म[5]कात् पृथक् ।
व्यवहारो भेदतः सिद्धसाधनं परमार्थतः ।।?
असिद्धिर्नहि तत्त्वेन भावाभावस्य भिन्नता ।।

इत्यद्भुता[6]ऽभावनिराक्रियेयं
प्रतीति(ः) संस्पर्शितया प्रबन्धात् ।
परीत्य[7] फल्गु स्फुरितं परेषां
सदर्थनीतेरयमेवसारः—— ।।

प्रमाणान्तर्भावः समाप्तः ।।छ।। (ठ)

---

[1] Ms. गृहीतेष्वप्यनर्थकम् ।
[2] Ms. स भाव० ।
[3] Ms. पक्षादिभिद्यते ।
[4] Ms. नास्याद् ।
[5] Ms. भावात्मता ।
[6] Ms. ०द्भुता भाव ।
[7] Ms. विपरीत्य ।

## ग्रन्थस्य श्लोकानुक्रमणिका

## पाठभेदः

अत्र च ग्रन्थे यत्र यत्र मीमांसाश्लोकवार्त्तिकीयाः श्लोकाः समुद्धृताः तत्र च बहुषु पाठेषु परिवृत्तिर्विलक्षणापि परिलक्ष्यते। परिवर्त्तनञ्चेदृशं स्वीयमनुकूलं विचिन्त्य ग्रन्थकृता कृतमिति केचित् कृतिनः सम्भावयन्ति। परे च केचिदपरमेव मार्गमनुसरन्तो मीमांसाश्लोकवार्त्तिकीयः पाठः कदाचिदीदृश एवासीदित्यनुमिमानाः पाठान्तरमेवैतदित्यनुमन्यन्ते। अस्तु तावद् यथा तथा वा, वयन्त्वादर्शपुस्तके यथादृष्टं प्रायस्तथा क्वचिदन्यथाऽपि लेखकप्रमादाद्वा कारणान्तराद्वा सर्वथैवाशुद्धिबहुलमसङ्गतमस्पष्टाक्षरं च पाठं सम्भावनापराधीना स्थाने स्थाने कथञ्चित् किञ्चित् परिवर्त्य संनिवेश्य ग्रन्थमुद्रापणे प्रवृत्ताः। सुतरामेव तुलनात्मकदृष्ट्या पाठकानां समालोचनासौकर्य्यार्थं पाठभेदं तावत् पुरतः संस्थापयामः—

**प्रमाणान्तर्भावे प्रथम (शब्द) परिच्छदे।**

प्रमाणान्तर्भावे

विषयोऽन्यादृशस्तावद् दृश्यते **शब्द लिङ्गयोः।**
सामान्यविषयत्वं च पदस्य **स्थापयिष्यते**॥ (पृः ४ पं ७–८)

श्लोकवार्त्तिके

विषयोऽन्यादृशस्तावद् दृश्यते **लिङ्गशब्दयोः।**
सामान्यविषयत्वं च पदस्य **स्थापयिष्यति**॥ (श्लोक० ५५)

प्रमाणान्तर्भावे

धर्मी धर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम्। (पृः ४ पं ६)
(धर्मो धर्मविशिष्टश्चेति पाठः सम्भाव्यमानः समीचीनः)

श्लोकवार्त्तिके

धर्माधर्मविशिष्टश्च लिङ्गीत्येतच्च साधितम्। (श्लो० ५६)
(अत्र धर्माधर्मेति न युक्तः पाठः 'धर्मो' इति सम्भाव्यते)

प्रमाणान्तर्भावे

राजा भर्त्ता मनुष्यस्य तेन **राजा** स उच्चते। (पृः ४ पं २८)

श्लोकवार्त्तिके

राजा भर्त्ता मनुष्यस्य तेन **राज्ञः** स उच्चते॥ (श्लो० ६६)

प्रमाणान्तर्भावे

न चानवगताकारः सम्बन्धः **कश्चिदिष्यते**। (पृः ५ पं ४)

श्लोकवार्त्तिके

न चानवगताकारः **सम्बन्धोऽस्तीति गम्यते**॥ (श्लो० ७१)

प्रमाणान्तर्भावे

**अन्वयोऽपि च** शब्दस्य प्रमेयेण निरूप्यते। (पृः ५ पं ७)

श्लोकवार्त्तिके

**अन्वयो न च** शब्दस्य प्रमेयेण निरूप्यते। (श्लो० ८५)

प्रमाणान्तर्भावे

तेन **सर्वस्य** दृष्टत्वात् व्यतिरेकस्य **वा गतेः**। (पृः ५ पं १२)

श्लोकवार्त्तिके

तेन **सर्वत्र** दृष्टत्वाद् व्यतिरेकस्य **चागतेः**। (श्लो० ८८)

**प्रमाणान्तर्भावे द्वितीय (उपमान) परिच्छदे।**

प्रमाणान्तर्भावे

**सादृश्यस्य च** वस्तुत्वं न शक्यमपवाधितुम्। (पृः १२ पं ३)

श्लोकवार्त्तिके

**सादृश्यस्यापि** वस्तुत्वं न शक्यमपवाधितुम्। (श्लो० उ० प० १८)

प्रमाणान्तर्भावे

**भूयोऽवयवसामान्ये योगो** जात्यन्तरस्य तत्। (पृः १२ पं ४)

श्लोकवार्त्तिके

**भूयोऽवयवसामान्ययोगो** जात्यन्तरस्य तत्। (श्लो० १८)

प्रमाणान्तर्भावे

प्रत्यक्षेणावबुद्धेऽपि **सादृश्येन गवि स्मृते**। (पृः १२ पं ६)

श्लोकवार्त्तिके

प्रत्यक्षेणावबुद्धेऽपि **सादृश्ये गवि च स्मृते**। (श्लो० ३८)

प्रमाणान्तर्भावे

**न वै** तम्यानुमानत्वं पक्षधर्माद्यसम्भवात्। (पृः १२ पं १३)

श्लोकवार्त्तिके

**न चैतस्यानुमानत्वं** पक्षधर्माद्यसम्भवात्। (श्लो० ४३)

प्रमाणान्तर्भावे

प्राक्प्रमेयं **च सादृश्यं** न धर्मत्वेन **मीयते**॥ (पृः १२ पं १४)

श्लोकवार्त्तिके

प्राक् **प्रमेयस्य सादृश्यं** न धर्मत्वेन **गृह्यते**। (श्लो० ४३)

प्रमाणान्तर्भावे

**गवयस्याप्यसंबन्धात्** न गोर्लिङ्गत्वमृच्छति। (पृः १२ पं १७)

श्लोकवार्त्तिके

**गवयश्चाप्यसम्बन्धान्न** गोर्लिङ्गत्वमृच्छति। (श्लो० ४५)

**प्रमाणान्तर्भावे तृतीय (अर्थापत्ति) परिच्छदे।**

प्रमाणान्तर्भावे

प्रमाणषट्कविज्ञातो **यत्रार्थोऽनन्यथाभवन्**। (पृः १७ पं ११)

श्लोकवार्त्तिके

प्रमाणषट्कविज्ञातो यत्रार्थो **नान्यथा भवेत्**। (श्लो० १)

प्रमाणान्तर्भावे

दृष्टः **पञ्चभिरित्यस्माद्** भेदेनोक्ता श्रुतोद्भवा। (पृः १७ पं १५)

श्लोकवार्त्तिके

दृष्टः **पञ्चभिरप्यस्माद्** भेदेनोक्ता श्रुतोद्भवा। (श्लो० २)

प्रमाणान्तर्भावे

तत्र प्रत्यक्षतो ज्ञात्रा **देहदाहेन शक्तिता**। (पृ: १७ पं १७)

श्लोकवार्त्तिके

तत्र प्रत्यक्षतो ज्ञानाद् **दाहाद्दहनशक्तता**। (श्लो० ३)

प्रमाणान्तर्भावे

वह्नेरनुमिता सूर्य्ये **भानात्तच्छक्तियोगिता**। (पृ: १७ पं १८)

श्लोकवार्त्तिके

वह्नेरनुमिता सूर्य्येभानात् **तच्छक्तियोग्यता**। (श्लो० ३)

प्रमाणान्तर्भावे

**गवयोपमितायाा गोस्तज्ज्ञानग्राह्यशक्तता**। (पृ: १७ पं २१)

श्लोकवार्त्तिके

**गवयोपमिता या** गौस्तज्ज्ञान**ग्राह्यता मता**। (श्लो० ४)

प्रमाणान्तर्भावे

अभिधानप्रसिद्ध्यर्थमर्था**पत्त्यवबोधिता**।

शब्देवाचकसामर्थ्यात् **तन्नित्यत्वस्य कल्पना**॥ (पृ: १७ पं २२–२३)

श्लोकवार्त्तिके

अभिधानप्रसिद्ध्यर्थमर्था**पत्त्याऽवबोधितात्**।

शब्दे बोधकसामर्थ्यात् **तन्नित्यत्वप्रकल्पनम्**॥ (श्लो० ५)

प्रमाणान्तर्भावे

गेहाच्चैत्रबहिर्भावसिद्धिर्या **त्विह वर्ण्यते**। (पृ: १७ पं २५)

श्लोकवार्त्तिके

गेहाच्चैत्रबहिर्भावसिद्धिर्या **त्विह दर्शिता**। (श्लो० ८)

प्रमाणान्तर्भावे

पक्षधर्माद्यनङ्गत्वाद् **भिन्नैषाऽप्यनुमानतः**। (पृ: १८ पं २)

श्लोकवार्त्तिके

पक्षधर्माद्यनङ्गत्वाद् **भिन्नैवाप्यनुमानतः**। (श्लो० १०)

प्रमाणान्तर्भावे

तदभावविशिष्टं **हि** गृहं धर्मो न कस्यचित्। (पृ: १८ पं ५)

श्लोकवार्त्तिके

तदभावविशिष्टं **तु** गृहं धर्मो न कस्यचित्। (श्लो० १२)

प्रमाणान्तर्भावे

गृहाभावविशिष्टस्तु तदाऽसौ **नैव गम्यते**। (पृ: १८ पं ६)

श्लोकवार्त्तिके

गृहाभावविशिष्टस्तु तदाऽसौ **न प्रतीयते**। (श्लो० १२)

प्रमाणान्तर्भावे

पूर्वं न **चाविशिष्टस्य** धर्मिणः स्यात् प्रमेयता।
न चात्र बाह्यदेशो वा चैत्रो वा गम्यते पुरा॥ (पृ: १८ पं ७–८)

श्लोकवार्त्तिके

पूर्वं न **चागृहीतस्य** धर्मिणः स्यात् प्रमेयता ।
न चात्र बाह्यदेशो वा चैत्रो वा **गृह्यते** पुरा ।। (श्लो० १६)

प्रमाणान्तर्भावे

**जीवतस्तु** गृहाभावः पक्षधर्मोऽत्र कल्प्यते । (पृः १८ पं ९)

श्लोकवार्त्तिके

**जीवतश्च** गृहाभावः पक्षधर्मोऽत्र कल्प्यते । (श्लो० १९)

प्रमाणान्तर्भावे

तत्सं**वित्तिर्बहिर्भावे नव्यबुद्धौ प्रजायते** । (पृः १८ पं १०)
(संस्थापितश्चायं पाठः सन्दिग्धश्चिन्त्यश्च)
पृः २३ पं ४, ५, पाठस्तु . . . . . . . . .जीवतो हि गृहाभावः पक्षधर्मोऽत्र कल्पितः ।
तत्संवित्तिर्बहिर्भावं वाचो वुद्ध्वा हि जायते ।। इति ।

श्लोकवार्त्तिके

तत्संवित्तिर्बहिर्भावं नचाऽवुद्ध्वोपजायते । (श्लो० १९)

प्रमाणान्तर्भावे

अग्निसत्तानपेक्षा हि धूम-सत्ता प्रतीयते ।
तद्ग्रहणस्य वेलायामग्न्यधीनत्वविन्नवा ।। (पृः १८ पं ११–१२)

श्लोकवार्त्तिके

अग्निमत्तानपेक्षा तु धूमवत्ता प्रतीयते ।
न तद्ग्रहणवेलायामग्न्यधीनं हि किंचन ।। (श्लो० २०)

प्रमाणान्तर्भावे

न तावता बहिर्भावश्चैत्रस्यैवं प्रसिध्यति ।। (पृः १८ पं १८)

श्लोकवार्त्तिके

न तावता बहिर्भावश्चैत्रस्यैवावधार्य्यते ।। (श्लो० २२)

प्रमाणान्तर्भावे

**स्थिते** सद्भावविज्ञाने गेहाभावधियाऽत्र तु । (पृः १८ पं १९)

श्लोकवार्त्तिके

**सिद्धे** सद्भावविज्ञाने गेहाभावधियाऽत्र तु । (श्लो० २३)

प्रमाणान्तर्भावे

**तेनाऽत्र** निरपेक्षस्य व्यभिचारो मृतादिना । (पृः १८ पं २२)

श्लोकवार्त्तिके

**तेनास्य** निरपेक्षस्य व्यभिचारो मृतादिना । (श्लो० २४)

प्रमाणान्तर्भावे

तस्मात् प्रत्यक्षतो गेहे **चैत्राभावेऽप्यभावतः** । (पृः १८ पं २४)

श्लोकवार्त्तिके

तस्मात् प्रत्यक्षतो गेहे **चैत्राभावे ह्यभावतः** । (श्लो० २५)

प्रमाणान्तर्भावे

तद्विशिष्टोऽनुमेयःस्यात् **पक्षधर्मत्ववादिभिः** । (पृः १८ पं २७)

श्लोकवार्त्तिके

तद्विशिष्टोऽनुमेयःस्यात् **पक्षधर्मान्वयादिभिः** ।। (श्लो० २७)

प्रमाणान्तर्भावे

तैश्च **तद्बोधनेत्येवमन्योन्याश्रयता च तत्** । (पृः १६ पं २)

श्लोकवार्त्तिके

तैश्च **तद्बोधतोऽवश्यमन्योन्याश्रयता** भवेत् ।। (श्लो० २८)

प्रमाणान्तर्भावे

न **प्रागवगतेत्येवं** सत्यप्येषा न कारणम् ।। (पृः १६ पं ६)

श्लोकवार्त्तिके

न प्रागवधृतेत्येवं सत्यप्येषा न कारणम् ।। (श्लो० ३०)

प्रमाणान्तर्भावे

**साहित्येन प्रमाणं हि** तयोरन्यन्न विद्यते । (पृः १६ पं ८) उ

श्लोकवार्त्तिके

**साहित्ये तु प्रमाणं च** तयोरन्यन्न विद्यते ।। (श्लो० ३१)

प्रमाणान्तर्भावे

अन्यथानुपपत्त्यैव **ह्यनेनान्यत्** प्रतीयते ।
**(अन्यत् प्रतीयते)** तच्चेत् साहित्यं न प्रतीयते ।। (पृः १६ पं ९–१०)

श्लोकवार्त्तिके

अन्यथानुपपत्त्यैव **ह्येकेनान्यत्** प्रतीयते ।
**तथा न कल्प्यते** तच्चेत् साहित्यं न प्रतीयते ।। (श्लो० ३२)

प्रमाणान्तर्भावे

अर्थापत्त्याऽवगन्तव्यः **पश्चाद्वस्त्वनुमानता** ।। (पृः १६ पं १२)

श्लोकवार्त्तिके

अर्थापत्त्यावगन्तव्यः **पश्चादस्त्यनुमानता** ।। (श्लो० ३३)

**प्रमाणान्तर्भावे चतुर्थ (अभाव) परिच्छदे ।**

प्रमाणान्तर्भावे—४र्थ परिच्छेदे

"**वस्तुसङ्कुरसिद्धिश्च** तत्प्रामाण्य-**समाश्रिता**" । (पृः २६ पं ३)

श्लोकवार्त्तिके—अभाव परिच्छेदे

"**वस्त्वसङ्कुरसिद्धिश्च** तत्प्रामाण्य**समाश्रया** ।। (१)

अत्र च प्रमाणान्तर्भावीयादर्शपुस्तके वस्तुसङ्कुरसिद्धिश्चेति पाठस्तु वस्तुगत्या न समीचीनः । समीचीनस्तु श्लोकवार्त्तिकस्थः पाठ एव । श्लोकवार्त्तिकस्य न्यायरत्नाकर-व्याख्या द्रष्टव्या ।

प्रमाणान्तर्भावे

"नास्तिता पयसो दध्नि **प्रध्वंसाभावलक्षणम्**" । (पृः २६ पं ५)

श्लोकवार्त्तिके

नास्तिता पयसो दध्नि **प्रध्वंसाभाव इष्यते** । ध्वंसाभावस्य लक्षणमिति पाठान्तरम् ।
(श्लो० वा० अभाव प्र० ३य श्लोकः)

प्रमाणान्तर्भावे

क्षीरे दधि **भवेदेव** दध्निक्षीरं घटे पटः। (पृः २६ पं ६)

श्लोकवार्त्तिके

क्षीरे दधि **भवेदेवं** दध्नि क्षीरं घटे पटः। (श्लो० ५)

प्रमाणान्तर्भावे

अप्सु गन्धो रसश्चाग्नौ वायौ **रूपं च तैः सह**। (पृः २६ पं ११)

श्लोकवार्त्तिके

अप्सु गन्धो रसश्चाग्नौ वायौ **रूपेण तौ सह**। (श्लो० ६)

प्रमाणान्तर्भावे

व्योम्नि **संस्पर्शता वेति** न चेदस्य प्रमाणता। (पृः २६ पं १२)

श्लोकवार्त्तिके

व्योम्नि **संस्पर्शिता ते च** नचेदस्य प्रमाणता। (श्लो० ६)

प्रमाणान्तर्भावे

**न वा वस्तुन एभिः** स्युर्भेदास्तेनास्य वस्तुता। (पृः २६ पं १५)

श्लोकवार्त्तिके

**न चावस्तुन एते** स्युर्भेदास्तेनास्य वस्तुता। (श्लो० ८)

प्रमाणान्तर्भावे

कार्य्यादीनामभावः **कार्य्योऽभावः कारणादितः**। (पृः २६ पं १६)

कश्लोवार्त्तिके

कार्य्यादीनामभावः **को योऽभावः कारणादिनः**। (श्लो० ८)

प्रमाणान्तर्भावे

यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो **यदस्त्ययम्**। (पृः २६ पं १७)

श्लोकवार्त्तिके

यद्वानुवृत्तिव्यावृत्तिबुद्धिग्राह्यो **यतस्त्वयम्**। (श्लो० ९)

प्रमाणान्तर्भावे

तस्माद् **घटादिवद्वस्तु** प्रमेयत्वाच्च **गृह्यताम्**। (पृः २६ पं १८)

श्लोकवार्त्तिके

तस्माद् **गवादिवद्वस्तु** प्रमेयत्वाच्च **गम्यते**। (श्लो० ९)

प्रमाणान्तर्भावे

**न चौपचारिकं वाऽत्र** भ्रान्तिर्वापि यदृच्छया। (पृः २६ पं १९)
..........विशेषात्मकता **वृथा**॥

श्लोकवार्त्तिके

**न चौपचारिकत्वं वा** भ्रान्तिर्वापि यदृच्छया। (श्लो० १०)
..........विशेषात्मकता **मृषा**॥

प्रमाणान्तर्भावे

**आत्मनः परिणामो** वा **विज्ञानं स्वान्यवस्तुनि**। (पृः २६ पं २२)

श्लोकवार्त्तिके

**साऽऽत्मनः** परिणामो वा विज्ञानं **वान्यवस्तुनि**॥ (श्लो० ११)

प्रमाणान्तर्भावे

**वस्तु विज्ञायते** कैश्चिद् रूपं किञ्चित् कदाचन। (पृ: २६ पं २४)

श्लोकवार्त्तिके

**वस्तुनि ज्ञायते** कैश्चिद् रूपं किञ्चित् कदाचन।। (श्लो० १२)

प्रमाणान्तर्भावे

तस्योपकारकत्वेन **वर्त्तते यस्तदेतरः**। (पृ: २७ पं १)

श्लोकवार्त्तिके

तस्योपकारकत्वेन **वर्त्ततेऽंशस्तदेतरः**। (श्लो० १४)

प्रमाणान्तर्भावे

ननु भावादभिन्नत्वात् **संयोगो ना (ह्य)** स्तितेन च। (पृ: २७ पं ७)

श्लोकवार्त्तिके

ननु भावादभिन्नत्वात्संप्रयोगोऽस्ति तेन च। (श्लो० १९)

प्रमाणान्तर्भावे

**धर्माणां भेद** इष्टो हि धर्म्यभेदेऽपि नः स्थिते। (पृ: २७ पं ९)

श्लोकवार्त्तिके

**धर्मयोर्भेद** इष्टो हि धर्म्यभेदेऽपि नः स्थिते। (श्लो० २०)

प्रमाणान्तर्भावे

उद्भवाभिभवात्मत्वाद् ग्रहणं **वाऽवतिष्ठते**। (पृ: २७ पं १०)

श्लोकवार्त्तिके

उद्भवाभिभवात्मत्वाद् ग्रहणं **चाऽवतिष्ठते**। (श्लो० २०)

प्रमाणान्तर्भावे

**नास्त्यत्रेदमितीत्थं** तु (तत्तत्) **संयोग** हेतुकम्। (पृ: २७ पं १२)
(अयं पाठो न समीचीनः)

श्लोकवार्त्तिके

**नास्त्यत्रेदमितीदं** तु तदसंयोगहेतुकम्। (श्लो० २६)

प्रमाणान्तर्भावे

मानसं नास्तिताज्ञानं **जायतेऽक्षानपेक्षया**। (पृ: २७ पं १४)

श्लोकवार्त्तिके

मानसं नास्तिताज्ञानं **जायतेऽक्षानपेक्षणात्**। (श्लो० २७)
(जायतेऽक्षानपेक्षयेति पाठान्तरं)

प्रमाणान्तर्भावे

(तत्र) यो यदभावः स्यान्मानमप्येवमिष्यताम्।। (पृ: २७ पं १६)

श्लोकवार्त्तिके

मेयो यद्वदभावो हि मानसप्येवमिष्यताम्।। (श्लो० ४५)

प्रमाणान्तर्भावे

भावात्मके **यथा माने** नाभावस्य प्रमाणता। (पृ: २७ पं १७)

श्लोकवार्त्तिके

भावात्मके **तथा मेये नाऽभावस्य** प्रमाणता। (श्लो० ४६)

प्रमाणान्तर्भावे

**परिच्छेदफलत्वेन** प्रामाण्यंस्याद्द्वयोरपि। (पृः २७ पं १९)

श्लोकवार्त्तिके

**परिच्छेदफलत्वाद्धि** प्रामाण्यंस्याद्द्वयोरपि। (श्लो० ४७)

प्रमाणान्तर्भावे

वस्तुनः कारणत्वं हि **दृष्टमित्यभिमानतः**। (पृः २७ पं २१)

श्लोकवार्त्तिके

वस्तुनः कारणत्वं हि **दृष्टमित्यभिमानिता**। (श्लो० ४८)

(मानतः इति पाठान्तरम्)

प्रमाणान्तर्भावे

**नैव लिङ्गप्रमेयत्वे** भवेतां तद्वदेव हि। (पृः २७ पं २२)

श्लोकवार्त्तिके

**न लिङ्गत्वप्रमेयत्वे** भवेतां तद्वदेव हि। (श्लो० ४९)

प्रमाणान्तर्भावे

तथा सति **समस्तोऽपि** व्यवहारो न सिध्यति। (पृः २७ पं २३)

श्लोकवार्त्तिके

तथा सति च **पूर्वोक्तो** व्यवहारो न सिध्यति। (श्लो० ४९)

प्रमाणान्तर्भावे

यत्राभावोऽस्ति तेनास्याः संबन्धो नैव **सिध्यति**। (पृः २८ पं १)

श्लोकवार्त्तिके

यत्राभावोऽस्ति तेनास्याः सम्बन्धो **नैव विद्यते**। (श्लो० ५०)

प्रमाणान्तर्भावे

प्रमाणानामनुत्पत्तेर्न **चाभावस्य धर्मता**। (पृः २७ पं २४)

श्लोकवार्त्तिके

प्रमाणानामनुत्पत्तेर्नाऽ **भावस्यापि धर्मता**। (श्लो० ५०)

('अनुत्पत्त्या भावस्यापि च धर्मता' पा०)

प्रमाणान्तर्भावे

न (चा) संनिहितस्तत्र तस्य धर्मो **भवेदयम्**। (पृः २८ पं २)

श्लोकवार्त्तिके

**यो न** सन्निहितस्तत्र तस्य धर्मो **भवेदियम्**। (श्लो० ५१)

प्रमाणान्तर्भावे

**अभावे न** तु सम्बन्धो भवेत् तद्विषयत्वतः। (पृः २८ पं ४)

('अभावेन तु सम्बन्धो' इति आदर्श पाठ एव समीचीनः)

श्लोकवार्त्तिके

**अभावेन तु** सम्बन्धो भवेत् तद्विषयत्वतः। (श्लो० ५२)

माणान्तर्भाव

**यज्ज्ञाना**विषयत्वं च ज्ञाने मेयं न विद्यते। (पृः २८ पं ५)

श्लोकवार्त्तिके

**तज्ज्ञाना**विषयत्वं च ज्ञाने मेयं न विद्यते। (श्लो० ५२)

प्रमाणान्तर्भावे

नागृहीते च धर्मत्वं गृहीते सिद्धसाधनम्। (पृः २८ ७)

श्लोकवार्त्तिके

नागृहीते हि धर्मत्वं गृहीते सिद्धसाधनम्। (श्लो० ५३)

प्रमाणान्तर्भावे

अभावशब्दवाच्यत्वात् **प्रत्यक्षादेव** भिद्यते। (पृः २८ पं ८)

श्लोकवार्त्तिके

अभावशब्दवाच्यत्वात् **प्रत्यक्षादेश्च** भिद्यते। (श्लो० ५४)

प्रमाणान्तर्भावे

(न) प्रमाणमभावो हि प्रमेयाणामभावतः। (पृः २८ पं ९)

श्लोकवार्त्तिके

**प्रमाणानामभावो** हि **प्रमेयाणामभाववत्**। (श्लो० ५४)

प्रमाणान्तर्भावे

**अभावोऽपि** प्रमाणेन स्वानुरूपेणमीयते। (पृः २८ पं १२)

श्लोकवार्त्तिके

**अभावो वा** प्रमाणेन स्वानुरूपेण मीयते। (श्लो० ५५)

प्रमाणान्तर्भावे

**प्रमेयत्वाद्ध्यभावस्तु** तस्माद् भावात्मकात् पृथक्। (पृः २८ पं १३)

श्लोकवार्त्तिके

**प्रमेयत्वाद् यथा** भावस्तस्माद् भावात्मकात् पृथक्। (श्लो० ५५)

इदमत्रावधयम्—चतुर्थपरिच्छेदे षड्विंशतिपृष्ठातः अष्टाविंशतिपृष्ठार्द्धभागपर्य्यन्तं अभावस्यातिरिक्तप्रमाणत्वे कौमारिलमतं तदीयश्लोकवार्त्तिकश्लोकैस्तुलनात्मकैश्चोल्लिख्य अत्रोच्यत इत्यादिना बौद्धसिद्धान्तमनुमृत्य ग्रन्थकारेण भट्टमतं निराकृतम्।

